अनुसन्धान-प्रकाशन-विभागीया

**त्रैमासिकी शोध-पत्रिका**

# शोध-प्रभा

**३३ वर्षे प्रथम-द्वितीयाङ्कौ ( जनवरी-अप्रैलमासाङ्कौ ) २००८ ई०**

प्रधानसम्पादकः

**प्रो० वाचस्पति उपाध्यायः**

कुलपतिः

सम्पादकः

**प्रो० रमेशकुमारपाण्डेयः**



प्रकाशन-स्थलम्

**श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्**

(मानितविश्वविद्यालयः)

**नवदेहली-११००१६**

# शोध-प्रभा

## श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य
## अनुसन्धान-प्रकाशन-विभागीया पत्रिका

१. एषा त्रैमासिकी शोध-पत्रिका।

२. अस्याः प्रकाशनं प्रतिवर्षं जनवरी-अप्रैल-जुलाई-अक्टूबरमासेषु भवति।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धान-प्रवृत्तेरुद्बोधनं प्रोत्साहनं विविधदृष्ट्याऽनु-सन्धेयविषयाणां प्रकाशनं च विद्यते।

४. अस्यां श्रीलालबहादुरशास्त्री-राष्ट्रियसंस्कृतविद्यापीठस्थानामन्येषां च विदुषां स्वोपज्ञविचारपूर्णा अनुसन्धानप्रधाननिबन्धाः प्रकाश्यन्ते।

५. अप्रकाशितानां दुर्लभानां प्राचीनचार्यरचितानां लघुग्रन्थानां सम्पादनभावानुवादटीकाटिप्पण्यादि-पुरस्सरं प्रकाशनमप्यस्यां क्रियते।

६. प्रकाशित-निबन्धः पत्रिकायाः एक प्रतिः लेखकाय निःशुल्कं दीयते, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवति।

७. अस्यां पत्रिकायां विशिष्टानां संस्कृत-हिन्द्याङ्ग्ल-ग्रन्थानां समालोचना अपि प्रकाश्यन्ते। तदर्थं द्वे प्रतिकृति प्रेषयितव्ये। आलोच्यग्रन्थस्यालोचना यस्मिन्नङ्के प्रकाशिता भवति सोऽङ्को ग्रन्थकर्त्रे निःशुल्कं दीयते किञ्च समालोचनापत्राण्यपि यथासौविध्यं दीयन्ते।

८. अस्याः वार्षिकसदस्यताराशिः १५०.०० रु० (पञ्चाशदुत्तरैकशतं रूप्यकाणि) सदस्यताराशिः कुलसचिव, श्रीलालबहादुरशास्त्री-राष्ट्रिय-संस्कृत-विद्यापीठ, नई दिल्ली-१६, इति सङ्केतेन (बैंकड्राफ्ट, पोस्टल आर्डर अथवा मनीआर्डर) द्वारा प्रेषणीयः।

९. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः 'सम्पादकः' 'शोध-प्रभा', श्रीलालबहादुरशास्त्री राष्ट्रिय-संस्कृतविद्यापीठ, कटवारिया सराय, नई दिल्ली-११००१६ इति सङ्केतेन विधेयः।

**सम्पादकः**

# नैवेद्यम्

संस्कृतभाषा या माधुर्यप्रागल्भ्यनैसर्गिकात्वसौकर्यभावगाम्भीर्यादिगुणगरिम्णा अखिलेतरभाषाणां मूर्धाभिषिक्तत्वेन विराजते, तदस्या भाषायाः परिशीलनं मानवमात्रस्य परमो धर्मः। प्रकृत्यैवेयं भाषा यत्तदुपज्ञत्वेन स्वत्वेन वा यं कमपि देशविशेषं नानुबध्नाति, सम्बध्नाति चात्मीयत्वेनाखिलानेव देशान्। अत एवेयं देवभाषेति पदवीमारोपिता विद्वद्भिः, अत एव सर्व एव स्त्रियः पुरुषा वा साधिकारा अध्येतुमिमामिति। अद्यापि परः सहस्राः संस्कृतविद्वांसः रूसजर्मनफ्रांस–इङ्गलैण्ड–अमेरिका–पोलैण्डादिदेशेषु योरोपखण्डे विराजन्ते।

सर्वास्वपि तत्तद्देशीयासु भाषासु च अद्यापि असङ्ख्याताः शब्दः विशुद्धसंस्कृता संस्कृतशब्दैः सह सादृश्यं जुषमाणस्तद्विकृतरूपा वा समुपलभ्यन्ते, इतस्ततः प्रसृताः संस्कृतभाषायां विश्वभाषाजननीत्वं साध्यन्तीति कस्याविदितम् अस्यां भाषायां ये ये धार्मिका राजनीतिकाः सामाजिका अर्थानुबधिनो वैज्ञानिकाश्च विषयाः, प्रणिबद्धाः सत्याहिंसापरस्वागृहनुतादयो मानवमात्रहितावहा वर्तन्ते, मन्यामहे, तेषां तलावगाहितया सम्यक् परिशीलनेन महानुपकारो जगतो भविष्यतीत्यस्माकं सुदृढो विवासः। अतः शान्तिसुधानिष्यन्दकरी अमन्दानन्दनिर्झरी संस्कृतभाषामाधुरीयं सर्वैः शान्ति–साम्राज्यस्थापनाकामैः विश्वैकात्म्यविधित्सुभिः सुधीभिः सर्वात्मना निषेव्या परिशीलनया च। यदबलम्क मानवजीवनस्य सौख्यं शान्तिः समृद्धिविश्वबधुत्वं वा पल्लवितं भवति तदखिलं ज्ञानविज्ञानं संस्कृतवाङ्मयमिदं सर्वोत्कर्षेण परिपूर्णतया च परामृशति। तदेतादृशस्य प्रेमःश्रेयः साधकस्य सर्वतोमुखप्रमुखज्ञेय–साधननिधानभूतस्यास्य साहित्यस्यापरिशीलनं नाम नूनं दैवदुर्विलसितमेव केवलमित्याकलयामो वयम्। अतो जगदिदं परितो सानन्दं शान्तिरसमारसयद् भूयोऽपि चतुरस्त्रतया समुल्लसत् भूयात्सर्ग–सादृश्यमादधानमिति।

परेशानुकम्पया तथाविद्यायास्तस्याः सुरभारत्या भव्यभावं ज्ञानसौरभं च क्रोडीकृत्य विलसन्तीयं शोधप्रभा विद्वज्जनानां शोधगर्भनिबन्धनिर्भरां करकमलमुपेतुमातुरेति प्रणिहितसामग्रीसौष्ठव–मासाद्य तदुद्भावकयत्नं सफलयन्तु सुधीजना इत्यावेदयते।

**प्रो० वाचस्पति उपाध्यायः**

कुलपतिः

# सम्पादकीयम्

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य शोधप्रभाख्या शोधपत्रिका विविधविषयगवेषणपूर्णानां निबन्धानां संग्रहं क्रोडीकृत्य विद्योततेतराम्। अनुसन्धानसरणिसम्पन्नानामाचार्याणां शोधार्थिनाञ्च शोधपूर्णनिबन्धान् कलेवरीकृत्य संस्कृतवाङ्मयपरिपोषणे निमग्नेयम् आनन्दसागरे निमज्जयति विदुषो नितान्तम्।

अधिवैदिकं वाङ्मयं विश्वस्य प्राचीनं साहित्यं विद्यते नास्यत्र विसंवादस्यावसरः। भारतीयशिक्षापद्धतौ गुरुमुखादधीतस्यैव शास्त्रस्य महत्त्वं स्वीकृतमासीत्। यथोक्तमस्ति ऋग्वेदे-**येदेषामन्यो अन्यस्य वाचं शक्तस्येव वदति शिक्षमाणः।** ऋग्वेदे ०७.१०३.०५

गुरुमुखादध्ययनेनैव कोऽपि सम्पूर्णं शास्त्रं शास्त्रमर्यादया बोद्धुं व्याख्यातुम् आध्यापयितुं वा समर्थः भवति अन्यथा सम्यक् परिशीलनं महते क्लेशाय कल्पते। वेदानां श्रुतिसंज्ञाभिधानादयमेवार्थः परिलक्ष्यते। यत्र स्वरमात्रस्यापि अशुद्धोच्चारणम् असह्यं भवति। शुद्धोच्चारणन्तु गुरुमुखादेव जायते।

स्वरभेदादर्थोऽपि भिन्नो भवति। फलतः न केवलम् अभीप्सितोऽर्थः स्वरभेदात् अपरिस्फुरति अपितु प्रयोक्तुः अनिष्टमपि जायते प्रोक्तमस्ति महाभाष्ये।

**दुष्टः शब्दः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाह।**
**स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोपराधात्।।** (महाभाष्यम्)

लिखितग्रन्थानामवलोकनेन विहितः पाठः पाठकस्य अधमत्वं द्योतयति।

**गीती शीघ्री शिरःकम्पी तथा लिखितपाठकः।**
**अनर्थज्ञोऽल्पकण्ठश्च षडेते पाठकाधमाः।।** (याज्ञवल्क्यशिक्षा)

अतः भारतीयशिक्षापरम्परायां गुरूपरम्परायाः विशिष्टं स्थानमस्ति। गुरोः सकाशादधिगता विद्या फलवती भवति, कल्पलतिकैव सकलं फलं प्रसूते। गुरोः सन्निधाने सुशिक्षितो जनः शास्त्रस्य तत्त्वं प्रकाशयितुं प्रभवति नान्यथा।

३३ वर्षे प्रथम-द्वितीय-संयुक्ताङ्के विविधविषयविश्लेषपराः सप्तविंशतिलेखाः प्रकाश्यन्ते। एवं प्रतिभाविशेषोद्- भासितशोधपूर्णा संस्कृतसौरभं वितन्वतीयं विदुषां सन्तोषाय भविष्यतीति कामयमानोहं प्रमादादज्ञानाद्वा सञ्जातस्य दोषजातस्य प्रशमनार्थं निर्देशदिप्रदानैश्च उत्साहश्रियः संवर्धनार्थमभ्यर्थते सुमनसः विदुषः।

**प्रो० रमेशकुमारपाण्डेयः**

सम्पादकः

# विषयानुक्रमणिका

## संस्कृतविभागः

## हिन्दी विभाग

# वेदेषु लक्ष्म्याः स्वरूप रहस्यं च

–देवर्षि कलानाथशास्त्री

विदितमेव विदुषां यदनेक सहस्राब्दीव्यापिन्या भारतीयायाः संस्कृतेराराध्यानां देवानां देवीनां च सुमहान् परिवारो देशमिमं विशिष्टविभूतिशालिनं परिकल्पयति, स्वकीयाशीर्भिः सम्पोषयति, तांस्तान् कामांश्च पूरयति येषामभ्यर्थना तेभ्यो विधीयते। अस्माकमयं देवगणो वेदक लमारभ्याऽद्यवधि समाराध्यत आराधकैः। वेदकालीना देवाः सूर्य- पूषा-अर्यमा, इन्द्र-वरुण-प्रजापति-गणपति प्रभृतयोऽपि सुविदिताः, पुराणकालीना राम-कृष्ण-दुर्गा-हनुमत्-प्रभृतयोऽपि कोटिशतो जनैः, पूज्यन्ते, तान्त्रिका भैरव-महाविद्याप्रभृतयो देवा देव्यश्चाप्युपास्यन्ते। मूर्तिपूजा खल्वास्माकं पुरातनी परम्परा, सा सगुणभक्तेर्जीवा भूतेति भारतस्य प्रत्यभिज्ञां प्रसेधयति। वेदकाले सूर्य-वरुणेन्द्रगणपतिप्रभृतीनां मेषां देवानां मूर्तिपरिकल्पना नाऽऽसीत्सुस्पष्टा तेषामपि मानवीकरणपूर्वकं पुरुषविध-मूर्तिपरिकल्पनां विधाय पूजनमारब्धं भारतीयै-रस्माभिः। देवनदी पतितपावनी भगवती गङ्गा सहस्राब्दीभ्यो हिमगिरितः प्रवहन्ती समग्रमपि देशं पीयूषधारया सञ्जीवयति, तस्या जले स्नात्वा धन्यतामनुभवन्ति जनाः, तस्याः पूजनमपि साक्षात्तत्रोपस्थाय क्रियते किन्तु मूर्तिपूजा-परम्परा तीयती बद्धमूला भारतीये जनमानसे यद् यावदस्माभिः शुभ्रमकरस्थितायाः सुधाकलशादि वहन्त्या मानवरूपिण्या देव्या गङ्गाया मूर्तिपरिकल्पनां कृत्वा तस्या ध्यानपूजनादि न क्रियते तावन्मनसि कृतार्थताबोधो नोदेति।

एवंविधैव स्थितिरन्यस्या महत्या जनमनो मोहिन्या देव्या अपि वर्तते। यस्याः पूजनमद्यत्वे सर्वोऽपि चिकीर्षति नैतादृश एकोऽपि जनोऽसि यस्तस्या अनुग्रहं न कामयते। तस्याः पूजनं प्रत्यक्षं कार्तिकामावस्यायां समस्तेऽपि देशे ससम्भारं क्रियते। उत्सवोऽयं समग्रस्यापि वर्षस्य प्रमुखतम उत्सव प्रसिध्यति। दीपोत्सवोऽयं भगवत्या लक्ष्म्याः पूजनस्योत्सवः। लक्ष्मीरियं कीदृशं स्वरूपमितिहासं च बिभर्तीति मानक् पर्यालोच्यते चेद् बहवो रोचका निष्कर्षाः, बहूनि मनोमोदकानि तथ्यानि चोद्भवन्ति।

वेदकालीना देवास्तानि प्रकृतिमहनीयानि तत्त्वानि प्रतिनिमधतिस्द यानि मानवजीवनस्य जीवातुभूतानि। सूर्यः, अग्निः, द्यौः, पर्जन्यादयो यथाऽस्माकं जीवनं पोषयदन्त तथा सर्वाधिकसमर्हणीया देवी वर्ततेऽस्माकमियं पृथ्वी याऽयुतेभ्यो वर्षेभ्योऽस्मभ्यं जल, धान्यं, खनिजान्, सर्वविधं जीवनदायि तत्त्वमविरतमश्रान्ततया विश्राणयति। काऽन्या देवता भवेद् या खल्विमामतिशयीत? अतो वेदकालस्य सर्वाधिकसमर्हणीया देवी समभूत् पृथ्वी। को न जानाति अथर्ववेदीयं पृथिवीसूक्तं यस्य ७३ हृदयावर्जका मन्त्रा अद्यापि काञ्चिदभूतपूर्वां प्रेरणामुद्।

**सत्यं बृहदृतमुग्रं दीक्षा तयो ब्रह्म यज्ञः पृथिवीं धारयन्ति।**
**सा नो भूतस्य भव्यस्य पत्नी, उरुं लोकं पृथिवी नः कृणोतु।**

पृथ्वी देवी अस्माकमतीतस्य, भविनश्च ईश्वरी, अधिष्ठात्रीति निश्चप्रचमेव। तदेवानेन मन्त्रेण स्पष्टीक्रियते।

**जनं बिभ्रती बहुधा विवाचसं नानाधर्माणं पृथिवी यथौकसम्।**

सहस्रं धारा द्रावणस्य मे दुहां ध्रुवेदं धेनुरनपस्फुरन्ती। इत्यस्माकं प्रार्थनाऽभूत्। उदीराणा उतासीनास्तिष्ठन्त प्रक्रामन्तः। पद्भ्यां दक्षिसव्याभ्यां मा व्यथिष्महिभूम्याम्। अयमस्माकमभिलाषोऽभूत्।

**"यस्यामापः परिचराः समानीरहारात्रे अप्रमादं क्षरन्ति।**
**सा नो भूमिर्भूरिधारा पयो दुहामथो उक्षतु वर्चसा।"**

इयमस्माकं याञ्चाऽभूत् सर्वानिमान् कामान् पूरयन्तीयं पृथिवी सर्वोत्कृष्टा देवताऽभूत्। कस्मिन्नपि मन्दिरे किमस्माकमद्य सा देवी पूज्यते? किं तस्यास्तादृशी पूजा, उपासना, पुरश्चरणादिकं किंचन कार्यते कर्मकाण्डिभिः? प्रश्नस्यास्योत्तरं यदि "नैव" इति दीयते तर्हि न स्यात्तदपितथम्। अद्यापि पूज्यतेऽस्माभिर्देवी पृथिवी किन्तु मूर्तिपूजापरम्परायां तस्यां मूर्तिं परिकल्प्य सा मूर्तिपूजा विधया क्रियते यथा तस्या महत्त्वं सर्वोपरि वर्तमानमपि न प्रत्यक्षीकर्तुं शक्यतेऽस्माभिर्यदियं पृथ्वी पूजांऽस्तीति। यदवधि मूर्तिपरिकल्पना पृथ्व्याः कृताऽस्माभिस्तस्याः स्वरूपं किञ्चिद्विपर्यवर्तते। अद्य कुत्रास्ति पृथ्वी पूजा? भगवत्या लक्ष्म्याः स्वरूपे। या लक्ष्मीरस्माभिर्दीपोत्सवे पूज्यते सा मूलतः पृथ्वी एव त्वासीत्। भूदेवीयं विष्णुपभूत्नी मन्यते।" विष्णुपत्निनमस्तुभ्यं पादस्पर्शं क्षमस्व मे।" इति वयं प्रतिप्रभातं तां प्रार्थयामः। विष्णुपत्नी सेयं पृथ्वी विष्णुरूपं स्वकीयं नाथं सूर्यं परितो भ्राम्यति, प्रतिवर्षमेकां परिक्रमां पूरयति।

अस्या वेदाराध्यायाः पृथिव्याः साक्षात् पूजनं तदा तु क्रियते स्मैव (पूजनमित्यस्यार्थ आराधना इत्येवाऽस्ति) किन्तु यदवधि मूर्तिपरिकल्पना तस्या व्यधीयत तदारभ्य तस्याः स्वरूपं चतुर्भिर्गजैः हिरण्यमामृतघटैः स्नाप्यमानाया देव्याः प्रासेध्यत। के सन्तीमे गजाः? चतसृणामपि दिशां पीयूषवर्षिणो जलदा मेघा एव त्विमां स्नपयन्ति, येनेयं कमलानि पोषयति, अस्माभ्यं चाभयं प्रयच्छति, वरं ददाति। अत एवास्याः हस्तचतुष्टये कमलानि, वराभयमुद्राश्च प्रत्यक्षीक्रियन्ते। वैष्णवमन्दिरेषु तिरुपति-प्रभृतिप्रमुखतीर्थस्थलेषु विष्णोर्वक्षसि भूदेवी, श्रीदेवी इत्यादि देवीनां या भावना सहस्राब्दीभ्यो जागर्ति सा तथ्यस्यास्य प्रतीकभूता यल्लक्ष्मीदेव्याः परिकल्पनायाः पृष्ठभूमौ मूलतो वेदकालीनायाः पृथ्वीदेव्या एवोत्सो विराजते। सैवास्मभ्यं धनं, धान्यं, गजानश्वान् स्थान्, हर्म्यान् विभूतीः, समृद्धीश्च प्रददाति। सर्वाऽपि मानवीया समृद्धिर्भगवत्याः पृथ्व्या एव कृपा प्रसूता।

इदमेव कारणं यदद्यापि ग्रामीणेष्वञ्चलेषु दीपावलीपूजनसमये भगवत्या लक्ष्म्याश्चित्रेण सह सर्वदा मृदा निर्मिता चतुर्मुखी पात्रस्वरूपा "हटडी" इत्याख्या प्रतिकृतिर्नैवेद्यनिधानाय स्थाप्यते यस्यां भर्जिता व्रीहयः (खील इति लोकभाषा प्रसिद्धं धान्यम्), चणकाः (भूंगडा इति लोके प्रसिद्धाः) अन्यञ्च नवधान्यस्वरूपं नैवेद्यं समर्प्यते देव्यै। सेयं मृदा पृथ्वीदेव्याः प्रतीकभूताऽस्माकं जीवातुः, नान्यत्परतरं समृद्धिमूलम्। वेदकालीना भूदेवी लक्ष्मीरूपेणाऽस्माभिः पूज्यते किन्तु बहवो वयं न जानीम एतस्य रहस्यम्। श्रीः, लक्ष्मीः इत्यादि नामानि वेदकाले प्राथितान्यभूवन् इति निश्चप्रचम्, किन्तु तानि भूदेव्याः, पृथ्व्या एव वाचकत्वं बिभ्रतिस्मेति सुदृढं वक्तुं शक्यते।

ये कर्मकाण्डप्रियास्तथ्यस्यास्योपरि विश्वासं सुशकं न मन्येरंस्तेषां कृते कांश्चन मनोरञ्जकानि प्रमापकानि समुद्धर्तुं शक्यते मया। भगवत्या लक्ष्म्या उपासनायै वैदिकमन्त्रप्रदायकं सुप्रसिद्धं सूक्तमस्ति "श्रीसूक्तम्"। इदं यद्यपि ऋग्वेदस्याथर्ववेदस्य वा परिशिष्टरूपेण खिलसूक्तरूपेण च प्रतिष्ठितं मन्यते तथापि सर्वाधिकः प्रचारोऽस्य सूक्तस्यास्ति देशे। मन्त्रानिमानुच्चार्य पुरोहिताः क्षीराहुतीः षोडशयजमानेभ्यो हावयन्ति। श्रीसूक्तस्यास्य मन्त्रा अपि स्पष्टं सङ्केतयन्ति यत् पृथ्वीपरकं व्याख्यानं विहायैतस्य सूक्तस्य स्थलानि न स्पष्टीकर्तुं शक्यन्ते।

**गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्। ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्।** मन्त्रोऽयं सुविदितः। अत्र हि गन्धद्वारा, करीषिणी च केयं श्रीः? नूनं गन्धः पृथिव्या गुणः। गोमयोपलिप्ता भूमिः सहस्राब्दीभ्योऽस्मान् स्वास्थ्यं सौख्यं च प्रयच्छति, सेयमेव गन्धद्वारा, करीषिणी च श्रीः। सेयमेव रथैः क्षुण्णा, रथमध्या, हस्तिनादप्रबोधिनी। अस्यामेव वनस्पतयः प्रादुर्भवन्ति बिल्वसदृशाः। अन्यथा किं तात्पर्यं तस्य मन्त्रस्य यत्रर्षिः कथयति "वनस्पतिस्तव वृक्षोथ बिल्वः।"? "कां सोस्मितां हिरण्यप्रकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम्" इत्यादि वयं सर्वे तारस्वरेणो च्चारयामः किन्तु कदाऽप्यर्थाविमर्शं प्रति सचेष्टा भवामः किम्? पृथ्व्यामेव दुर्गाः, प्राची राः, हिरण्यप्रकाराः सम्भवन्ति। मेघवर्षणैरार्द्रा सेयमेव भवति। सूर्य तेजसा सेयं ज्वलन्त्यपि पीयूषवर्षैस्तृप्तेवाऽस्मांस्तर्पयति। लक्ष्मीः कथमार्द्रा स्यात् कथं च ज्वलन्ती?

यथैव भवन्तः श्रीदेवीं भूदेवीं जानीयुस्तथैव श्रीसूक्तस्य सर्वाऽप्यर्थौ दर्पणवद् भासेत, पृथ्व्याश्च गरिमा स्पष्टीभवेत्। दीपावली पर्वणि समुद्रतनया सेयं लक्ष्मीः पूज्यते यस्या भ्राता चन्द्रोऽपि समुद्रमथनोद्भूतो मन्यते। यथा विष्णुपत्नी (सूर्यानुगता) पृथ्वी सूर्यं परितो भ्राम्यति तथैव लक्ष्मीभ्राता चन्द्रः पृथ्वीं परितो भ्राम्यति। चन्द्रस्य पृथ्व्या उपग्रहत्वं लक्ष्मीभ्रातृत्वं प्रतीकरूपेण परिगृह्णाति। भुवनकोशस्थिता पृथ्वी पद्मोपरिस्थिता लक्ष्मीः सम्पद्यते। इयं भूदेवी लक्ष्मीरूपेण समुद्रमथनोद्भूता किमिति मन्यते इत्यत्र तदिदमौचित्यं मया बहोः कालात् शोधलेखरूपेण प्रस्तूयते यत् खगोल-भूगोलविज्ञानविवां स्थापनानुसारं समुद्रे यो जलपूरः (टाइड, ज्वार इत्यादि पदैर्बोध्यः)

सर्वाधिकबलशाली समृद्धवेगश्च भवति स अमायां सम्भवति। कार्तिकस्यामा समुद्रपूरस्य बलवन्ति दृश्यान्यद्यापि प्रत्यक्षीकारयति। एवं विधानि दृश्यानि समुद्रमथनस्य कथां चरितार्थयन्ति। अमायां चन्द्रो न दृश्यते, अपरेऽह्निचन्द्रदर्शनं भवति। तदिदं दृष्ट्वैव परोक्षप्रिये रूपकपाटिष्ठै ऋषिभिः समुद्रमन्थनस्य परिकल्पना कृता स्यात् तस्माच्चन्द्रस्य पृथ्व्याश्चोद्भवस्य रूपकं च प्रतिष्ठापितं स्यादिति सुशकमनुमातुम्। अत एव चन्द्रो लक्ष्मीभ्राता, पृथ्वी भ्राता, माता भूमिरस्माकम्, अतः शिशवश्चन्द्रं मातुल (चन्दा मामा) इति व्यपदिशन्ति। सेयं विश्वासपरम्परा लोकमानसे शताब्दीभ्यो बद्धमूलाऽस्ति।

दीपावलीमहोत्सवो (यस्याभिधानं दीपान्विता, यक्षरात्रिः दीपोत्सवः इत्यादि विविधैः प्रकारैः सूच्यते) वर्षस्य प्रमुख उत्सवः परिगण्यते, विशेषतयोत्तरभारते, अस्मिन् महोत्सवे च लक्ष्म्याः पूजनमेव प्रामुख्यं विभर्ति। मध्यकाले हि तया सह कुबेरस्य पूजनं क्रियतेस्मेति विदुषां धारणा यतो लक्ष्मीपूजा यक्षसंस्कृतेरपि प्रमुखपूजात्वेनाद्रियते स्म, यक्षरात्रेरुत्सवे कुबेरपूजा क्रियते स्म, सहैव लक्ष्मीपूजाऽपि। कुबेरः खलु यक्षराजो धनदोऽस्त्येव। गतासु शताब्दीषु कुबेरस्य स्थानं गणपतिना गृहीतमिति लक्ष्मी चित्रपटे गणेशोऽपि स्थितो दृश्यते पूज्यते च। पूजाया अस्या अवसरे न कश्चिदपि लक्ष्म्या वैदिकं स्वरूपं स्मरति न चाधिसंख्यका जना विदन्ति यन्मूलतो लक्ष्म्या आराधना स्मज्जीवातुभूतायाः पृथिव्या एवानुग्रहस्य परिणतिः। डॉ. रामधारीसिंहदिनकरसदृशै विद्वभिस्तु सारोपं साधितमस्ति यद् वेदकाले पूजा- प्रथा नाऽऽसीदनागता, न हि वेदेषु "पूजा" शब्दः क्वचित् प्राप्यते। अतएव शोधविदुषामवधारणा यद् वेदकाले पूजा नाऽऽविष्कृताऽभूत्। पूजा हि पुष्पकर्म, यज्ञः "पशुकर्म"। यज्ञः श्रेष्ठतमकर्मत्वेन वैदिकानां प्रमुखं कर्माऽभूत्, वेदोत्तरकाले "पुष्पकर्म, 'पूजा प्राचलनत्' पूजायाश्च प्रमुख आधारो मूर्तिपरिकल्पनाऽस्त्येव। अतो वैदिकानां देवानां मूर्तिपरिकल्पनाऽक्रियत। तत एव पृथिव्या मूर्तिकल्पनं लक्ष्मीरूपेण पर्याणमत्।

शोधानुसन्धानादिषु रुचिमभिनिदेशं च धारयतां विदुषां विचाराय निवेदनमिदं प्रतुष्टूषितम्। श्री देव्या, भूदेव्याश्च महिमानं तिरुपतिस्थ वेङ्कटेश्वरमन्दिरपरम्पराऽपि वेत्ति यतो भूदेव्यपि भगवतो विग्रहस्य सामीप्यमधिगच्छति। केवलं मूर्तिपूजापरम्परा जुषां कतिपयेषां कृते नूतन आविष्कार इवायं प्रतियेत यत् कश्चिन्यादृशो लक्ष्मीदेवीं भूदेव्या अभिन्नां सिसाधयिषति। किन्तु स्फुटमेवेदं भवेत् सर्वेषां तत्त्वज्ञानां "श्रीसूक्त" स्यार्थाधिगमपूर्वकं विचारे कृते इत्यनुसन्धायैवात्र सर्वमिदमुपन्यस्तम्।

# सोमयागस्य वैज्ञानिकं विवेचनम्

**डॉ. गोपालप्रसादशर्मा**

श्रौतयागेषु सोमयागस्य स्वरूपं क्रियात्मकदृष्ट्या, अपि च वैज्ञानिकदृष्ट्या विस्तृततममस्ति। अत्र सोमयागविषये केषाञ्चन तथ्यानां विषये विचारः प्रस्तूयते।

**यज्ञः**

तत्रादौ यज्ञशब्दो विचार्यते। यद्यपि यज्ञशब्दः श्रौतस्मार्तादिप्रकारैः हवनरूपे प्रसिद्धोस्ति तथापि यज्ञशब्दस्यार्थक्षेत्रं विस्तृतमस्ति। यज्ञशब्देनेकानामर्थानां समाहारोस्ति। एतानर्थान्ध्यात्वैव विभिन्नैरधिकारिभिः कृतानां साधनानां यज्ञ इति नाम। यथा ज्ञानयज्ञः, तपोयज्ञः, दानयज्ञः, स्वाध्याययज्ञ इत्यादयः। सम्प्रत्य-प्येतस्मिन्युगे यज्ञशब्दस्याकर्षणं समीचीनतया विद्यते। सर्वजनहिताय सर्वजनसुखाय चेति भावनया क्रियमाणेन कर्मणा सहापि यज्ञशब्दः संयोज्यते, यथा श्रमयज्ञः, भूदानयज्ञः, जपयज्ञ इत्यादयः। वयं यद्यत्र शास्त्रीयतायाः प्रश्नमेकत्र कृत्वा पश्येम, तदापि परम्परया हरिप्रसन्नताया भावना मानवकल्याणस्य भावना च भवितुमर्हति।

भारतीयसंस्कृतौ यज्ञो येन केन प्रकारेण चतुर्ष्वपि आश्रमेषु संयुक्तोस्ति। यथा ब्रह्मचर्यावस्थायां ब्रह्मयज्ञः स्वाध्याययज्ञो वा। एवमेव गृहस्थाश्रमे क्रियात्मकयज्ञस्य वैशिष्ट्यमस्ति। एतस्मिन्नाश्रमे देवयज्ञभूतयज्ञपितृयज्ञमनुष्ययज्ञादयोनुष्ठीयन्ते। एवमेव वानप्रस्थाश्रमे तपोयज्ञः, संन्यासाश्रमे च मानसयज्ञः। जैमिनीयोपनिषद्ब्राह्मणानुसारं पुरुषस्य सार्थकता यज्ञ एवास्ति। यावत्कालपर्यन्तं स यज्ञं न करोति, तावत्कालपर्यन्तमनुत्पन्न एव मन्यते।[१] पुरुषसूक्तादप्ययमेव सिद्ध्यति यद्यज्ञादेव सृष्टिरुत्पन्ना।[२] ऐतरेयब्राह्मणानुसारं तु यज्ञस्तारणसमर्थ उडुप एव।[३] मीमांसादर्शनानुसारं देवतामुद्दिश्य द्रव्यस्य त्याग एव यागः।

---

१. अजातो ह वै तावत्पुरुषो यावन्न यजते स यज्ञेनैव जायते, ३.३.४.८
२. शुक्लयजुर्वेदः अध्यायः, ३१
३. ऐतरेयब्राह्मणम्, १.१.३

**सोमयज्ञस्य जीवनायुष्यस्वरूपम्—**

देवाननुसृत्य मनष्यैरसुरैश्च यज्ञा अनुष्ठिताः, अस्य वर्णनं ब्राह्मणग्रन्थेषु प्रायः लभ्यते। छान्दोग्योपनिषदनुसारं मानवजीवनमेव सम्पूर्णरूपेण यज्ञस्य स्वरूपमस्ति। अत्र पुरुषस्यायुः षोडशाधिकशतं वर्षाणि निर्धारितमस्ति। अस्यामुपनिषदि प्रातर्माध्यन्दिनतृतीयसवनानुरूपं जीवनयज्ञस्य अवस्थात्रयं स्वीकृतमस्ति। पुरुषस्य प्रथमानि चतुर्विंशति वर्षाणि प्रातःसवनम्। गायत्रीच्छन्दसि चतुर्विंशत्यक्षराणि भवन्ति, अपि च प्रातःसवने सर्वा ऋचो गायत्रीच्छन्दस्का भवन्ति। उक्तं च—

'पुरुषो वै यज्ञस्तस्य यानि चतुर्विंशति वर्षाणि तत् प्रातः सवनम्'[१] जीवनयज्ञस्यास्य भागस्य देवता वसुरस्ति। जीवनस्य चतुर्विंशतिवर्षतश्चतुश्चत्वारिंशद्वर्षात्मको भागः, अष्टषष्ठिवर्षपर्यन्तात्मकः कालो माध्यन्दिनसवनमस्ति। माध्यन्दिनसवने या ऋचो भवन्ति ता त्रिष्टुप्छन्दसि भवन्ति। अस्य देवता रुद्रोस्ति। अस्य कालस्य माध्यन्दिनसंज्ञा सम्यगेव प्रतिभाति, यतोस्मिन्नेव सवने दक्षिणाप्रदानादीनि महत्वपूर्णानि विधिजातानि सम्पद्यन्ते। अतः परं तृतीयसवनं कथ्यते। अस्य समयोष्टचत्वारिंशद्वर्षात्मकोस्ति। जगतीच्छन्दस्यष्टाचत्वारिंशदक्षराणि भवन्ति। अस्मिन् प्रसङ्ग इदं कथितं यन्महीदास ऐतरेय एतस्य जीवनयज्ञस्य सर्वाङ्गीणं ज्ञानमध्यगच्छत्। अतो रोगमुक्तो भूत्वा स षोडशोत्तरं शतं वर्षाणि यावदजीवत्। अनेन प्रकारेण सोमयागस्य स्वरूपे मानवजीवनं यज्ञरूपमस्ति।

उपनिषदामनुसारं यज्ञो मानवजीवनस्य प्रत्यङ्गमोतप्रोतोस्ति। नारायणोपनिषदि ज्ञानवतः पुरुषस्य जीवनं नित्यगतिशीलं जीवनमिति भणितम्। तथाहि—

'तस्यैवं विदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी शरीरमिध्ममुरो वेदिर्लोमानि बर्हिर्वेदः शिखा हृदयं यूपः काम आज्यं मन्युः पशुस्तपोग्निर्दमः शमयिता दक्षिणा वाग्घोता प्राण उद्गाता चक्षुरध्वर्युर्मनो ब्रह्मा श्रोत्रमग्नीद्यावद्ध्रियते सा दीक्षा यदश्नाति तद्धविर्यत्पिबति तदस्य सोमपानं यद्रमते तदुपसदो यत्सञ्चरत्युपविशत्युपतिष्ठते च स प्रवर्ग्यो यन्मुखं तदाहवनीयो या व्याहृतिराहुतिर्यदस्य विज्ञानं तज्जुहोति यत्सायम्प्रातरत्ति तत्समिधं यत्प्रातर्मध्यन्दिनं सायं च तानि सवनानि ये अहोरात्रे ते दर्शपूर्णमासौ येऽर्धमासाश्च मासाश्च ते चातुर्मास्यानि यऋतवस्ते पशुबन्धा ये संवत्सराश्च परिवत्सराश्च तेहर्गणाः सर्ववेदसं वा एतत्सत्रं यन्मरणं तदवभृथ एतद्वै जरामर्यमग्निहोत्रं सत्रं य एवं विद्वानुदगयने प्रमीयते देवानामेव महिमानं गत्वादित्यस्य सायुज्यं गच्छति' इत्यादि।[२]

१. छान्दोग्योपनिषद्, अध्यायः ३, खण्डः१६
२. नारायणोपनिषद्, ८०

**अग्निष्टोमः**

सोमयागेषु प्रमुखहविष्यरूपेण सोमस्य प्रदानं क्रियते। एतेषु सोमप्रधानयागेषु प्रथमगणनीयो मूलभूतोग्निष्टोमोस्ति। इष्टिः, पशुः, सोमश्च, अनेन प्रकारेण श्रौतयागानां वर्गत्रये विभागे सति सौमिकवर्गस्य मूलयागस्त्वग्निष्टोम एव। वामनशर्मादिभिः पद्धतिकारैचार्यैः प्रकृतियागरूपेणाग्निष्टोम एव स्वीकृतः।[१]

ताण्ड्यमहाब्राह्मणानुसारं प्रजापतिरकामयत बहु स्यां प्रजायेयेति, स एतमग्निष्टोममपश्यत्तमाहरत्तेनेमाः प्रजा असृजत।[२] विष्णुपुराणानुसारं तु ब्रह्मणः पूर्वस्मान्मुखाद् गायत्र्य ऋचः, त्रिवृत्स्तोमः, रथन्तरसाम तथा चाग्निष्टोमो जायन्त।[३] कालिकापुराणे तु यज्ञवराहस्य कपोलादारभ्य कर्णमूलपर्यन्ताद् भागादग्निष्टोमस्योत्पत्तिर्वर्णिता।[४]

गोपथब्राह्मणं देवताभ्योग्निष्टोमस्य विभिन्नकृत्यानामुत्पत्तेरुपदेशं करोति। यथा श्रद्धातो दीक्षणीयेष्टेः, अदितेः प्रायणीयेष्टेः, सोमाद् देवात् सोमक्रयस्य, विष्णोरातिथ्येष्टेः, सूर्यात् प्रवर्ग्यस्य, स्वधात उपसदिष्टेः, अग्नीषोमाभ्यामुपवसथस्य, प्रातःकालीनदेवताभ्यः प्रातरनुवाकस्य, वसुभ्यः प्रातःसवनस्य, रुद्रेभ्यो माध्यन्दिनसवनस्य, आदित्येभ्यस्तृतीयसवनस्य, वरुणादवभृथस्य, अदितेरुदयनीयेष्टेः, मैत्रावरुणादानुबन्ध्येष्टेः, देवीदेविकाभ्यो देवतानां हविषः, कामाद् दशातिरात्रस्य, स्वर्गलोकादुदवसानीयेष्टेः। अनेन प्रकारेण समग्रस्याग्निष्टोमस्य प्राकट्यं समभवत्।[५]

**अग्निष्टोमस्य माहात्म्यम्—**

सकलकामनापूरकोयमग्निष्टोमः। अयमाशयः-अन्यैर्यागैर्यानि फलानि लभ्यन्ते, तानि सर्वाण्यप्ये-केनाग्निष्टोमेन प्राप्यन्ते। अस्य पुष्टिरापस्तम्बश्रौतसूत्रे कृतास्ति।[६] सत्याषाढश्रौतसूत्रानुसारं 'सर्वकामोग्निष्टोमः' इति। ताण्ड्यमहाब्राह्मणे कथितं यद् 'ज्येष्ठो यज्ञो वा एष यदग्निष्टोमः'[७] इति। 'प्रजापतिर्वाव ज्येष्ठः स ह्येतेनाग्रेयजत'[८] इति। अन्यासु संस्थास्वप्येतस्यैव प्रथमानुष्ठानं भवति। तस्मादेवायं ज्येष्ठः कथितः। अस्य माहात्म्यं वर्णयता कथितं यद्यथा रथचक्रस्याद्यन्तौ न भवतस्तथैवास्याप्याद्यन्तौ न भवतः। यद्यप्यग्निष्टोमस्य

१. ''प्रकृतिस्त्रिविधाग्निहोत्रं दर्शपूर्णमासावग्निष्टोम इति अन्या विकृतिरूपा''—आधानपद्धतिः।
२. ताण्ड्यमहाब्राह्मणम्, ६.११
३. विष्णुपुराणम्, १.५.५२
४. कालिकापुराणम्, अध्यायः ३०
५. गोपथब्राह्मणम्, १.४.७
६. इक्थ्येन पशुकामो यजेत् षोडशिना वीर्यकामः, अतिरात्रेण प्रजाकामः पशुकामो वा-आपस्तम्बश्रौतसूत्रम्, १४.१.२
७. ताण्ड्यमहाब्राह्मणम्, ६.३.८
८. तैत्तिरीयसंहिता, ७.१.१.४

प्रारम्भः प्रायणीयेष्टेर्भवति, समाप्तिश्चोदयनीयेष्टेः, तथापि वस्तुत आद्यन्तरहितत्वात् प्रायणीयेष्ट्युदयनीयेष्ट्यौ समाने एव।[१]

**सोमपदस्यार्थविचारः—**

वेद उक्तं यद् 'य एवं विद्वान् सोमेन यजते'[२] इति। अत्र सोमयागस्य विधानमस्ति। मीमांसकाः 'सोमेन यजेत' इत्यत्र लक्षणां स्वीकुर्वन्ति। 'सोमेन यागं भावयेत्' 'यागेन इष्टं भावयेत्' अपि च 'सोमेन भावयेत्' 'यागेन भावयेत्' इत्यादि वाक्यभेदभयाल्लक्षणाया आश्रयं गृह्णन्ति। ते वाक्यदोषापेक्षया पददोषमुचितं मत्वा मत्वर्थलक्षणां स्वीकुर्वन्ति। 'सोमवता यागेन इष्टं भावयेत्' इत्यर्थं स्वीकुर्वन्ति। मीमांसान्यायप्रकाशे विस्तृतं विश्लेषणं 'सोमेन यजेत' इति विषये समुपलभ्यते।

महाप्रभुभिः श्रीमद्भिर्वल्लभाचार्यैरेतस्मिन् विषये शास्त्रानुकूलं, विलक्षणं, मौलिकं मार्गं प्रदर्शितम्। तेषां मतानुसारं सोमशब्दोग्निष्टोमनामकस्य यागस्यैव बोधकोस्ति। आचार्यवर्याणामियं दृष्टिर्यत् 'सोमोग्निष्टोमः'[३]। अतोस्मिन् वाक्ये सोमयागस्यार्थादग्निष्टोमेन यजनस्य विधानं वर्तते। अस्यैव व्याख्यानावसरे श्रीपुरुषोत्तममहाभागा वर्णयन्ति यत् सोमशब्दस्याग्निष्टोमरूपसोमयागपरकेर्थे स्वीकृते सत्यपि सोमद्रव्यस्यार्थं ग्रहीतुं लक्षणाश्रयस्यावश्यकता नास्ति। सोमयागकथनेनैव सोमवल्ल्या अर्थोनायासं प्राप्यते। सोमयागे सोमद्रव्यस्य यानि संस्कारविधायकानि वाक्यानि सन्ति, तैरेव सिद्धोयं विषयो यद्यदि सोमद्रव्यमेव न स्यात्तदा तस्य संस्काराः कथं सम्पद्येरन्। अतः संस्कारानुपपत्तिरेवायं सोमद्रव्यात्मको याग इत्यर्थापत्तिप्रमाणेन सूचयति। अथवापरपक्षे 'सोमोस्त्यस्मिन्निति सोमवान्' इत्यस्यां व्युत्पत्तौ सोमशब्दान्मतुपर्थेच् प्रत्यये कृते सोमशब्दः सिद्ध्यति। यद्येवं मन्यते चेत् सोमशब्द एव सोमवानित्यस्य बोधं प्रकाशयति। अर्थात् सोमद्रव्यात्मको यागः। एवं च व्याकरणदृष्ट्यापि सोमशब्दो मतुपर्थे मन्यते चेत् सोमपदस्य सोमवति लक्षणा व्यर्थैव। एवं योगरूढोर्थोत्र स्वीकरणीयः।[४]

---

१. ऐतरेयब्राह्मणम्, ३.१४.५
२. तैत्तिरीयसंहिता, ३.२.२.५
३. सर्वनिर्णयप्रकरणम्, श्लोकः २
४. सोमोग्निष्टोम इति। एवं सोमपदस्य यागनामत्वबोधनेन सोमेन यजेतेत्यत्र न मत्वर्थलक्षणेति बोधितम्। न च द्रव्यालाभः शङ्क्यः। सोमसंस्कारादिचोदनार्थापत्त्यैव तत्प्राप्तेः। यद्वा सोमोस्मिन्नस्तीति सोमवानिति मतुबर्थे 'अर्श आदिभ्योज' (पाणिनिः ५.२.१२७) दित्यनेनाचि कृते सोम इति भवति एवं योगसिद्धेः प्रसिद्ध्या रूढेरपि निश्चयान्निर्मन्थ्यन्यायेन योगरूढः सोमशब्द आदरणीयः। 'एवञ्च यद्यग्निष्टोमः सोमः स्यात् पुरस्तादुक्थ्यं कुर्वीत यद्युक्थ्यः स्यादतिरात्रं कुर्वीतेति (तैत्तिरीय-संहिता ३.१.७) श्रुतिरपि सङ्गता भवति। अग्निष्टोमोक्थ्यादीनां संस्थात्वेन संस्थावतो यागस्य नामकथनस्यावश्यकत्वात्। देवा वै यद् यज्ञेकुर्वत ते देवा एतं महायज्ञमपश्यन् ''इत्युपक्रम्याग्रे'', य एवं विद्वान् सोमेन यजते इति विधानदर्शनस्यैवमेव सामञ्जस्याच्चेति-सप्रकाशः तत्त्वदीपनिबन्धः पृष्ठम् ६।

मीमांसका: 'सोमेन यजेत' इति वाक्यं विशिष्टविध्युदाहरणे गुणविशिष्टविध्युदाहरणे वा प्रयुञ्जते। मीमांसापरिभाषायां, मीमांसान्यायप्रकाशे, अर्थसङ्ग्रहादिषु ग्रन्थेष्वेतदेवोदाहरणं दृश्यते। परञ्च 'सोमेन यजेत' इति वाक्यमन्वेषणीयमस्ति। जगद्गुरुभि: श्रीमद्भिर्वल्लभाचार्यै: 'य एवं विद्वान् सोमेन यजते' इति वाक्यमुपस्थापितम्।

वस्तुतस्त्वेतादृशं काठिन्यं सन्दर्भप्रकरणाभावादापतति। अर्थसङ्ग्रहे पर्युदासप्रकरणे 'तस्य व्रतम्', नेक्षेतोद्यन्तमादित्यम् ने अपि च ''एतावता हैनसा वियुक्तो भवति'' इत्यत्र वाक्यत्रयेप्येकवाक्यता स्वीकृतास्ति। एतेन वाक्यत्रयस्याप्येकत्रैवोल्लेखमावश्यकमासीत्। यस्यां स्मृतौ 'नेक्षेत' इति वाक्यं प्राप्यते तस्यां स्मृतौ स्नातकधर्मप्रकरणे 'तस्य व्रतम्' इति वाक्यं न दृश्यते। एवमेवोपसंहारेपि 'तावता ह' इति वाक्यं न दृश्यते। अनेन प्रकारेणोपक्रमोपसंहारयो: एकात्रास्पष्टत्वे सति 'नेक्षेत' इत्यादि वाक्यस्यार्थबोधसमये 'एतावता ह' इति वाक्यशेषेण पापक्षयस्तस्य वाक्यस्य साध्यरूपेणास्तीति स्वीकरणं कथमुपपद्यते? अर्थसङ्ग्रहस्य विद्वद्भिर्भाष्यकारै: (डॉ. दयाशङ्करशास्त्रिभि:[१], डॉ. कामेश्वरनाथमिश्रै:[२], डॉ. सत्यप्रकाशशर्मणा[३] अपि च डॉ. राजेश्वरशास्त्रिमुसलगाँवकरै:[४]) अस्मिन् विषये ध्यानाकर्षणं कृतम्।

**सोमस्योपत्तिस्थानं माहात्म्यं च—**

तैत्तिरीयसंहितानुसारं गायत्रीच्छन्द: श्येनपक्षिरूपेण सोमं स्वचञ्चुमध्ये धृत्वा पृथिव्यामानीतवानासीत्[५]। सुश्रुतसंहितायाश्चिकित्सास्थानस्यैकोनत्रिंशाध्याये सोमविषये वर्णनं लभ्यते। यथा—

**ब्रह्मादयोसृजन् पूर्वममृतं सोमसंज्ञितम्।**
**जरामृत्युविनाशाय विधानं तस्य वक्ष्यते॥[६]**

**सुश्रुतसंहिता ( २९.१५ )नुसारम्—**

**नाग्निर्न तोयं न विषं न शस्त्रं नास्त्रमेव च।**
**तस्यालमायुः क्षपणे समर्थानि भवन्ति हि।**

---

१. अर्थबोधिनी पृष्ठम्, १५५
२. प्रकाशिका पृष्ठम्, १७९
३. प्रकाश: पृष्ठम्, १८०
४. अर्थमीमांसा, पृष्ठम् ३२२
५. तैत्तिरीयसंहिता, ६.१.६
६. सुश्रुतसंहिता चिकित्सास्थानम्, २.९.१

**सोमपानानन्तरं व्यक्तिरत्युत्साहेन युद्ध्यते।**[१]

सुश्रुतसंहितायामस्या लतायाः प्राप्तिस्थानस्यापि विषय एतादृश उल्लेखः प्राप्यते[२]—

**हिमवत्यर्बुदे सह्ये महेन्द्रे मलये तथा।**
**श्रीपर्वते देवगिरौ गिरौ देवसहे तथा॥**
**पारियात्रे च विन्ध्ये च देवसुन्दे ह्रदे तथा।**
**उत्तरेण वितस्तायाः प्रवृद्धा ये महीधराः॥**
**पञ्च तेषामधो मध्ये सिन्धुनामा महानदः।**
**हठवत् प्लवते तत्र चन्द्रमा सोमसत्तमः॥**
**तस्योद्देशेषु चाप्यस्ति मुञ्जवानंशुमानपि।**
**काश्मीरेषु सरो दिव्यं नाम्ना क्षुद्रकमानसम्॥**
**गायत्रस्त्रैष्टुभः पाङ्क्तो जागतः शाक्वरस्तथा।**
**अत्र सन्त्यपरे चापि सोमाः सोमसमप्रभाः॥**

एतेषु श्लोकेषु सोमोत्पत्तेः स्थाननिर्देशोस्ति, यदियं लता हिमालये, अर्बुदे, सह्ये, महेन्द्रे, मलये, श्रीपर्वते, देवगिरौ, पारियात्रे, विन्ध्ये, देवसुन्दे, ह्रदे च प्राप्यते। वितस्ता नद्या उत्तरे पञ्चपर्वतानि सन्ति, तेषामधोभागे मध्ये सिन्धुनामके महानदे सोमस्तरन्नास्ते।

सोमाभावे पूतीकादीनां विधानमस्ति।'सोमापहरणे विधावतेच्छतेति ब्रूयात्' इति।[३] सोमक्रयणानन्तरं यदि सोमोपह्रियते तदा स्वजनाः सोमान्वेषणार्थं प्रेष्यन्ते प्राप्ते सति कात्यायनोर्जुनतृणस्य विधानं करोति।[४] कात्यायनानुसारमर्जुनलताया अभावे पूतीकालताया विधानं तदभावेरुणदूर्वायासतदभावे हरितकुशानां विधानमस्ति।[५] ताण्ड्यमहाब्राह्मणे तु सोमाभावे पूतीकाया विधानमेव दृश्यते, तदभावेर्जुनतृणस्य विधानमस्ति।[६] पूतीकालतया देवास्तृप्यन्ते।[७] परञ्च पूतीकया सह निम्नाङ्कितवस्तूनां सम्मेलनविधानमस्ति।[८]

'प्रतिधुक्च प्रातः पूतीकाश्च शृतञ्च मध्यन्दिने पूतीकाश्च दधिचापराह्ने पूतीकाश्च।'

---

१. ऋग्वेद, ८.८.६
२. सुश्रुतसंहिता, २९.२७-३१
३. कात्यायनश्रौतसूत्रम्, २५.१२.१८
४. कात्यायनश्रौतसूत्रम्, २५.१२.१९
५. कात्यायनश्रौतसूत्रम् २५.१२.२०
६. ताण्ड्यमहाब्राह्मणम् ९.५.३.,९.५.७
७. ताण्ड्यमहाब्राह्मणम् ९.५.४
८. ताण्ड्यमहाब्राह्मणम् ९.५.५

अयमाशय: प्रात:सवने पूतीकया सह धारोष्णं दुग्धं मेलनीयं, माध्यन्दिनसवने तप्तं दुग्धं तथा तृतीयसवने दधिं सम्मेल्य होतव्यम्।

एतस्या: सोमलताया: संस्कारस्थानमुपरव इति कथ्यते। उपरवे चत्वारि छिद्राणि भवन्ति। इदं हृदयस्थानीयं भवति। ज्ञातव्योयं विषयो यद्धृदयेपि चत्वार्येव बाल्वसंज्ञान्यङ्गानि भवन्ति।

अनेन प्रकारेण वयं पश्यामो यत्सोमयाग: कश्चन शास्त्रीयवैज्ञानिकक्रियाविशेषो वर्तते। अस्मिन्यागे मुख्यं द्रव्यं सोम एव। सोमोस्मिन्युगे वैज्ञानिकान्वेषणेनैवोपलब्धुं शक्यते। परमावश्यकं यत्सोमस्य गुणलक्षणो-त्पत्तिस्थानादीनि महत्वपूर्णानि तथ्यान्येकीकृत्य तेषां विशिष्टाध्ययनं करणीयमपि च नि:स्वार्थभावेनैवान्वेषणं विधातव्यम्। प्रतिभाति यदद्यतनीये मानवे लोभमोहस्वार्थमदादीनां दुर्गुणानां प्राबल्येनेयं सोमलता दृष्टिपथे नायाति। एनां लतां प्राप्तुं निर्मत्सरेण भाव्यम्।

# श्रौतयज्ञानां प्रकृति-विकृतिभेदः

**डॉ० सुन्दरनारायणझा**

विश्वसाहित्ये वेदानां स्थानं सर्वोपरि विद्यते। वेदेषु विविधकामनानुगुणं विविधाः यज्ञाः प्रतिपादिताः सन्ति। 'वेद' इत्येतदस्यापरनाम श्रुतिरिति। येषां यज्ञानां श्रुतौ विधानान्युपलभ्यन्ते ते श्रौतयज्ञाः। तेषां श्रौतयज्ञानां द्रव्ययज्ञत्वेनापि शास्त्रेषु वर्णनान्युपलभ्यन्ते। यद्यपि नित्यनैमित्तिककाम्यभेदैर्यज्ञास्त्रिविधाः। उक्तानां त्रिविधानामेव श्रौतयज्ञानां यजनीयद्रव्यभेदात् पुनस्त्रयो भेदाः भवन्ति। एषु प्रथमास्ते यज्ञाः सन्ति येषां द्रव्यं मानवीयभोज्यपदार्थानि सन्ति। यथा—व्रीहयो यवास्तिलाः गोधूमाः पयो दधि-घृतादयः। एतानि द्रव्याणि ब्रह्मौ पक्त्वैव यज्ञेषु प्रयुज्यन्ते, अतस्ते पाकयज्ञा उच्यन्ते। येषु यज्ञेषु सोमास्तत्स्थानीया पूतिकाः वा प्रयुज्यन्ते ते सोमयज्ञाः कथ्यन्ते। येषां द्रव्यं पशवो भवन्ति ते पशुयज्ञा उच्यन्ते।

गोपथब्राह्मणे पैप्पलादसंहितायाः 'अग्निर्यज्ञं त्रिवृतं सप्ततन्तुम्'[1] इति मन्त्रांशमुद्धृत्योक्तम्—

**'सप्तसुत्याः सप्त च पाकयज्ञाः, हविर्यज्ञाः सप्त तथैकविंशतिः।**
**सर्वे ते यज्ञा अङ्गिरसोऽपि यन्ति नूतना यानृषयः सृजन्ति ये च सृष्टाः पुराणैः॥'**[2]

एतद्विभागानुसारमेषां सप्तकानां नामनिर्देशः श्रौतग्रन्थेष्वेवं प्राप्यते—

१. पाकयज्ञाः—औपासनहोमः, वैश्वदेवः, पार्वणम्, अष्टका, मासिश्राद्धम्, श्रवणा, शूलगवश्च।

२. हविर्यज्ञाः—अग्निहोत्रम्, दर्शपूर्णमासौ, आग्रयणम्, चातुर्मास्यानि, निरूढपशुबन्धः, सौत्रामणी चेति।

३. सोमयज्ञाः—अग्निष्टोमः, अत्यग्निष्टोमः, उक्थ्यः, षोडशी, वाजपेयः, अतिरात्रः, आप्तोर्यामश्च।

उक्तानां पाक-हवि-सोमसंस्थानां सप्त-सप्त संस्थाः उपर्युक्ताः। तेषु सप्तपाकयज्ञानां सम्बन्धः गृह्यसूत्रैस्सह वर्तते। एते च गृह्योक्ताः यज्ञाः स्मार्ता इत्युच्यन्ते। अवशिष्टानां सप्तहविर्यज्ञसंस्थानां सप्तसोमसंस्थानां

---

१. गो. ब्रा. १.१.१२ ; पै. सं. - ५.२२.१
२. गो. ब्रा. १.५.२५

च सम्बन्धः मन्त्रब्राह्मणैस्सहाऽस्ति। तस्मादेव कारणादिमे यज्ञाः श्रौतयज्ञा अभिधीयन्ते। एष्वेवकविंशतियज्ञेषु भेद-प्रभेदैर्पशुयज्ञा अप्युक्ताः।

वस्तुतो गोपथब्राह्मणोक्ता गणना पैप्पलादसंहितायाः ''अग्निर्यज्ञं त्रिवृतं सप्ततन्तुम्'' इति मन्त्रांशस्य व्याख्यानरूपेण कृता। परिगणितेभ्यो सप्तपाकयज्ञसंस्थाभ्योऽतिरिक्ताऽप्यनेके पाकयज्ञाः गृह्यसूत्रेषूपलभ्यन्ते। हविर्यज्ञानां सोमयज्ञानां चापि बहवो भेदाः शाखा-ब्राह्मण-श्रौतसूत्रेषु निर्दिश्यन्ते।

श्रीमता स्वामिदयानन्दसरस्वतिना यत्र क्वचिदपि यज्ञानां समुल्लेखः कृतस्तत्र सर्वत्राग्निहोत्रादारभ्याश्वमेधपर्यन्ताः निर्दिष्टाः।[1]

अस्य कारणमिदं प्रतीयते यच्छतपथब्राह्मणे कात्यायनश्रौतसूत्रे चाश्वमेधस्य विधानं सर्वान्त उपलभ्यते। यद्यपि यज्ञानां विस्तारोऽग्निहोत्रादारभ्य सहस्रसंवत्सरसाध्ययज्ञपर्यन्तं वर्तते। शाखा-ब्राह्मण-श्रौतसूत्रेषु समेषामेषां यज्ञानां धानान्यु-पलभ्यन्ते। उदाहरणार्थमिह कात्यायनश्रौतसूत्रे निर्दिष्टानां प्रमुखयज्ञानामुल्लेखः क्रियते—

| | |
|---|---|
| (१) अग्न्यन्वाधानम् | (२) अग्निहोत्रम् |
| (३) दर्शपूर्णमासौ | (४) दाक्षायणयागः |
| (५) आग्रयणेष्टिः | (६) दर्विहोमाः, क्रैडिनीयेष्टिः |
| (७) आतिथ्येष्टिः | (८) मित्रविन्देष्टिः |
| (९) चातुर्मास्यानि | (१०)निरूढपशुबन्धः |
| (११) सोमयागः | (१२) एकाहाः |
| (१३) द्वादशाहः | (१४) सत्ररूपो द्वादशाहः |
| (१५) गवामयनम् | (१६) वाजपेयः |
| (१७) राजसूयः | (१८) अग्निचयनम् |
| (१९) सौत्रामणिः | (२०) अश्वमेधः |
| (२१) पुरुषमेधः | (२२) अभिचारयागाः |

१. ऋग्वेद. भा. भूमिकायां प्रतिज्ञाविषये ३८८ तमे पृष्ठे (रामलालकपूर ट्रस्ट, सं. २)

(२३) अहीनाः (२४) अतिरात्रः

(२५) सत्राणि (द्वादशाहादारभ्य सहस्रसंवत्सरपर्यन्तम्) (२६) प्रवर्ग्यः

अन्यश्रौतसूत्रेषु एतादृशानामेव न्यूनाधिकानां यागानां वर्णनान्युपलभ्यन्ते। उपर्युक्ताः सर्वेऽपि श्रौतयज्ञाः त्रिधा विभक्ताः—(१) प्रकृतिः (२) विकृतिः (३) प्रकृतिविकृत्युभयात्मकभेदैः।

**(१) प्रकृतियागस्य लक्षणम्**

प्रकृतियागस्य त्रीणि लक्षणानि याज्ञिकैर्मीमांसकैश्च प्रदर्श्यन्ते—

(क) यत्र कृत्स्नं क्रियाकलापमुच्यते सा प्रकृतिः। यथा—दर्शपूर्णमासौ।

कलापशब्दोऽत्र लिङ्गानुशासनकारैः प्रायेण पुँल्लिङ्गो निर्दिश्यते। तथापि—

लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य[1] इति पतञ्जलिवचनात् "सम्बन्धमनुवर्तिष्यते"[2] इति वचनाच्च पुंल्लिङ्गस्य नपुंसके प्रयोगाच्च कलापशब्दस्य पुंस्त्वं प्रायिकं ज्ञेयम्।

(ख) यतो विकृतिरङ्गानि गृह्णाति सा प्रकृतिः यथा-दर्शपूर्णमासौ।

अर्थाद्यत्र समग्राङ्गोपदेशः सा प्रकृतिरिति मीमांसान्यायप्रकाशकारः।[3] प्रकर्षेणाङ्गोपदेशो यत्र क्रियते सा प्रकृतिः। कृत्स्नाङ्गविषयत्वप्रकर्षः इति सायणः।[4] यज्ञानां पूर्वाङ्गानि उत्तराङ्गानि च श्रौत्रसूत्रेषु प्रतिपादितानि सन्ति। तानि सर्वाण्यङ्गानि यत्र समग्रतया विवेचितानि भवन्ति सोऽयं यागः प्रकृतिरित्युच्यते।

(ग) प्रकृतिवद् विकृतिः कर्त्तव्या इति चोदकाद् यत्र नाङ्गप्राप्तिः सा प्रकृतिः।

अर्थाद् यथा प्रकृतियागेषु पूर्वोत्तराङ्गानि कथितानि आचरितानि वा तथैव विकृतियागेषु अङ्गानि आचरणीयानि।

एतानि त्रीण्यपि लक्षणानि स्वल्पभेदेन मीमांसान्यायप्रकाशे उपलभ्यन्ते। एषु प्रथमलक्षणानुसारं गृहमेधीयेष्टिः दर्विहोमश्च प्रकृतियागेऽन्तर्गतौ भवतः। मीसांसाप्रवक्त्रा विकृतौ प्राकृतस्य विधेर्दर्शनात् पुनः श्रुतिरनर्थिका स्यात् इति सूत्रेण विकृतौ चोदकेन प्राप्तानां प्राकृतधर्माणां दर्शनात् चोदकवचनेन पुनः प्राप्तिरनर्थिका

१. महाभाष्ये, २.१.३६
२. महाभाष्ये, १.१.१
३. मी. न्या. प्र. सारविवेचनी टीकायाम्, (प-. ५२, का. सं. सी. प्रकाशितः सन् १९२५)
४. तै. सं. भाष्यभूमिकायाम्, (पृ. ८, पं. १३, वै. सं. सं. पूणे, वेदभाष्यभूमिकासंग्रहे काशी पृष्ठे ६)

भवेदित्यतो गृहमेधीयेष्टेर्यावदुदककर्मता प्रतिपादिता। शब्दान्तरेण गृहमेधीयेष्टिर्विकृतियाग इत्युक्तं भवति। तथापि प्रकृतियागात् प्राप्तानां केषाञ्चित् धर्माणां श्रुतौ निर्देशस्योपलम्भाद् अत्र तावन्त एव परिगृह्यन्ते येऽत्रोपदिष्टाः। सूत्रकारस्यैतद्वचनानुसारं प्रकृतेः प्रथमलक्षणानुगुणं गृहमेधीयेष्टिः प्रकृतिकर्मान्तर्गता परिगृह्यते। अत्र २४ तमात् सूत्रात् ३३तमसूत्रपर्यन्तं कृत्स्नमधिकरणं द्रष्टव्यम्। यत इमे कर्मणी यावदुक्ते स्वीक्रियेते।

द्वितीयलक्षणानुसारं गृहमेधीयेष्टेर्दर्विहोमतश्च न कापि विकृतिरङ्गानि गृह्णाति। अत नैते प्रकृतियागेऽन्तर्भवतः। यस्य पर्णमयी जुहूर्भवति इत्यादीनामनारभ्याधीतविधीनां प्रकृतिगामित्वं मीमांसकैरास्थीयते। यदि नाम गृहमेधीयेष्टिर्नप्रकृतिः, तर्हि तत्र पर्णतायाः प्राप्तिर्न भवितुं शक्या, इष्यते च। अत एव मीमांसान्यायप्रकाशकारेण श्रीमदापदेवेनोक्तम्—अत्र विकृतिर्यतोऽङ्गानि गृह्णाति सा प्रकृतिरिति न प्रकृतिशब्देन विवक्षितम्, गृहमेधीये पर्णताया अप्राप्तिप्रसाङ्गात्। नहि गृहमेधीयात् काचन विकृतिरङ्गानि गृह्णाति मानाभावात्। किन्तु चोदकाद्यत्राङ्गाप्राप्तिस्तत्कर्म प्रकृतिशब्देन विवक्षितम्। यथा-दर्शपूर्णमासौ..... गृहमेधीयादिष्वपि न चोतकादङ्गप्राप्तिः। यत्र चोदकाप्रवृत्तिस्तत्रानारभ्याधीतानां सन्निवेशः।[1]

तृतीयलक्षणानुसारं गृहमेधीयेष्टिर्दर्विहोमश्च प्रकृतिकर्मणी भवतः। एषु लक्षणेषु प्रथमं लक्षणं सुगमं दोषरहितञ्च वर्तते। नवीनमीमांसकैर्द्वितीयलक्षणानुसारं गृहमेधीयेष्टौ पर्णताया अप्राप्तिकारणात् तृतीयं लक्षणमास्थितम्। इदं तृतीयं लक्षणं न केवलं क्लिष्टम्, अपितु लक्षणान्तर्गतयोः प्रकृतिविकृत्योरन्योन्याश्रयत्वाद् अन्योन्याश्रयदोषदुष्टमप्यस्ति। नहि प्रकृतेर्लक्षणमविज्ञाय विकृतेर्ज्ञानं भवति, अविज्ञाते च विकृतौ 'चोतकात् यत्र नाङ्गप्राप्तिः' इति वक्तुं न शक्यते। अयं दोषो द्वितीयलक्षणेऽपि घटते, यतस्तत्र प्रकृतिलक्षणे विकृतिपदस्यापि निवेशोऽस्ति—'यतो विकृतिरङ्गानि गृह्णाति सा प्रकृतिः' इति।

## ( २ ) विकृतियागस्य लक्षणम्

येषु यागेषु तत्तत्कर्मोपयोगी समस्तः क्रियाकलापो न पठ्यते, कर्मणः पूर्त्यर्थं च य अन्यतः (प्रकृतेः सकाशात्) क्रियाकलापान् गृह्णन्ति ते विकृतियागा उच्यन्ते। यथा-दीक्षणीयेष्टिः, दाक्षायणेष्टिः, मित्रविन्देष्टिः।

आपस्तम्बपरिभाषाप्रकरणस्य 'त्रिभिः कारणैः प्रकृतिर्वर्तते प्रत्याम्नानात् प्रतिषेधादर्थलोपाच्च'[2] इति सूत्रस्य व्याख्यायां हरदत्तकपर्दिस्वामिनौ 'चकारात्' नियमः परिसंख्या भूतोपदेशानां कारणानामपि संग्रहणं

---

१. मीमांसान्यायप्रकाशे, ४४तमे पृष्ठे।
२. आप. परि. सूत्र, ४.२

कुरुतः। प्रकृतेः परिसंख्यया गृहमेधीयेष्टौ चोदकात् प्रयाजादीनां प्राप्तावपि पुनः गृहमेधीयेष्टौ आज्यभागस्य विधानं प्रयाजादीनां निवृत्यर्थं मन्वाते। एतत्प्रमाणेन गृहमेधीयेष्टेर्विकृतित्वं बाधितं भवति।

स्वामिकरपात्रनाम्ना प्रसिद्धाः वैदिकविषयमर्मज्ञाः स्वकीये वेदार्थपारिजातनाम्नि ग्रन्थे केनचिन्मीमांसकेनान्येनात्र द्वे विप्रतिपत्ती प्रदर्शिते। तत्र प्रथमा—अस्य क्रतोर्दाक्षायणेष्टिरिति न व्यवहारो मीमांसकेषु, किन्तु दाक्षायणयज्ञ इत्येवव्यवहार इति। अत्रोच्यते लेखकस्य मते 'दाक्षायणयज्ञेन स्वर्गकामो यजेत' इत्येवं विहितो दाक्षायणयज्ञो न दर्शपूर्णमासाभ्यां भिन्नोऽपितु तत्रैव अभ्यासरूप गुणफलविधिः। सत्येवं यदि दर्शपूर्णमासयोः दर्शेष्टिः, पूर्णमासेष्टिः पदाभ्यां प्रयोगो भवति तर्हि तत्रैव गुणफलविधिरूपेण निर्दिष्टे दाक्षायणयज्ञे इष्टित्वं केन वारयितुं शक्यते?

इष्टेर्लक्षणं यथा—इष्टिशब्दः ऋत्विक्चतुष्टयसम्पाद्य सपत्नीकयजमाकर्तृककर्मनाम।[1] इदं च लक्षणं दाक्षायणक्रतावपि समवैति। तेनास्येष्टित्वमेव। इदमन्यत् यल्लेखकस्य मतानुसारं मीमांसकेषु 'दाक्षायण यज्ञं' इत्येव व्यवहारः। सत्यपि तथा व्यवहारे कथं तेन दाक्षायणयागस्य इष्टित्वमपाकर्तुं शक्यते। द्वितीया—दाक्षायणयागः दर्शपूर्णमासयोरेवाभ्यासगुणरूपो न क्रत्वन्तरम्। तेन नायं विकृतियाग इति। वस्तुस्तु शबरस्वामी, कुमारिलभट्टस्तदनुयायिनो न दाक्षायणयागं क्रतवन्तरं मन्यन्ते। परन्त्वेषां मतं वैदिकमतविरोधान्न गृहीतुं योग्यम्। यदा तु दाक्षायणयागस्य विधानं कौषीतकिब्राह्मणे दृश्यते तदाऽस्य क्रत्वन्तरत्वविकृतित्वमेव प्रमाणीभवति। कुतूहलवृत्तिकारेण दाक्षायणयागे गुणफलविधेः प्रत्याख्यानं कृत्वाऽस्य यागान्तरत्वं विकृतियागत्वं च सप्रमाणं व्यवस्थापितम्।

### ( ३ ) प्रकृतिविकृत्युभयात्मकस्य यागस्य लक्षणम्

योः यागः स्वयं विकृतिरूपः सन्नप्यन्यस्य कस्यचिद् यागस्य प्रकृतिभावं गच्छति, स प्रकृति-विकृतिरूपो यागो निगद्यते। यथा-चातुर्मास्यानां वैश्वदेवं पर्व। वैश्वदेवं कर्म सकर्मपूर्त्यर्थं प्रकृतेः सकाशादङ्गानि समादत्ते। परन्त्विदमेव वैश्वदेवं पर्व चातुर्मास्यानाम् उत्तरपर्वणां प्रकृतिभावमापद्यते। तदुक्तम्—'वैश्वदेवं वरुणप्रघाससाकमेधशुनासीरीयाणाम्'[2] इति। प्रकृतिरित्युपदिष्टादनुवर्तते।

यतोऽग्निष्टोमे सोमयागसम्बन्धी समस्तमपि पदार्थं साकल्येनोपदिश्यते, अतोऽयमन्येषां सोमयागानां प्रकृतिरुच्यते—'अग्निष्टोम एकाहानां प्रकृतिः'[3]। किन्तु तस्याङ्गता दीक्षणीयेष्टिः, उपसदिष्टिः, आतिथ्येष्टिश्चे-

---

१. श्रौतपदार्थनिर्वचनम्, पृ. १
२. आप. परि. ३.३६
३. तत्रैव, ४.३

त्यादयः इष्टयः स्वक्रियाकलापान् दर्शपूर्णमासाभ्यां गृह्णन्ति। अङ्गैः सह क्रियमाणकर्मैव फलप्रदं भवति। इत्थमग्निष्टोमोऽन्यसोमयागानां प्रकृतिः, किन्तु तस्याङ्गरूपा अवान्तरेष्टयः विकृतयः। यथा विकृतिरूपेण स्वीकृतासु इष्टिषु प्रधानकर्मणास्तत्तत्प्रकरणे निर्देशे सत्यप्यङ्गकर्मणां प्रकृतेर्ग्रहणाद् ता विकृतय उच्यन्ते तत्रैवावान्तरेष्टीनां विकृतिरूपत्वात् विकृतिरूपत्वमप्यस्त्येव।

अनेनोक्तविवेचनेनेदं स्पष्टमेव प्रतिभाति यत् समस्तानां हविर्यज्ञानां प्रकृतिः-दर्शपूर्णमासौ। समस्तानामेकाहानां प्रकृतिरग्निष्टोमः तथा च समस्तपशुयागानां प्रकृतिरग्निष्टोमान्तर्गतो अग्निषोमीयः पशुयागः। यतस्तत्प्रकरणे एव पशुयागसम्बन्धी समस्तः क्रियाकलापः पठ्यते। श्रौतसूत्रकारैस्तु पशुयागसम्बन्धिसमस्त-मङ्गजातं निरूढपशुबन्धप्रकरणे उच्यते। अतः श्रौतसूत्रकाराणां मते निरूढपशुबन्धः पशुयागानां प्रकृतिः।

अत्र मतभेदोऽपि दृश्यते। अस्माभिर्मीमांसकानां याज्ञिकानां च मतानुसारं प्रकृतिविकृत्योर्यानि लक्षणान्युदाहरणानि चोक्तानि तानि न साम्प्रतिकैर्मीमांसकैर्याज्ञिकैश्च सर्वथा मान्यानि। अस्य प्रधानं कारणं तेषामेकाङ्गिज्ञानं सम्प्रदायबद्धता च वर्तते। एतत्सर्वं दाक्षायणेष्टेर्यद्वा दाक्षायणयज्ञस्य प्रकरणे कुतूहलवृत्तिकारमतमुद्धृत्य विस्पष्टीकृतम्।

वस्तुतस्तु प्रकृतिविकृतिभावे आचार्याणां लक्षणभेदैर्दृष्टिभेदैश्च भेदो द्रष्टुं शक्यते। लक्षणभेदैर्गृहमेधीयेष्टेः प्रकृतित्वं विकृतित्वं च कथंकारं विज्ञायत इति पूर्वत्रोक्तम्। दृष्टिभेदेन दर्विहोमविषयको मतभेद इह प्रस्तूयते। बौधायनगृह्यसूत्रे दर्विहोमं प्रकृत्योक्तम्—

**आघारं प्रकृतिं प्राह दर्विहोमस्य बादरिः।**
**अग्निहोत्रं तथाऽऽत्रेयः काशकृत्स्नस्त्वपूर्वताम्॥**[1]

अनेन वचनेन बादरिमते दर्विहोमस्य आघारः प्रकृतिः, आत्रेयमते अग्निहोत्रम्। अर्थाद् दर्विहोमो विकृतिरूपः। काशकृत्स्नस्तु दर्विहोमस्य अपर्वतामाह अर्थान्न स प्रकृतिर्न विकृतिः। इदमेव साम्प्रतिकानां मीमांसकानां मतम्।

---

१. बौ. गृ. सू., १.४.४४

# सम्बन्धस्वरूपविश्लेषणेऽम्बाकर्त्र्या वैशिष्ट्यम्

**डॉ० प्रमोदकुमारशर्मा**

शब्दशास्त्रसंसारं हरिप्रणीते वाक्यपदीयग्रन्थे दार्शनिकत्वप्रतिष्ठापकः, शास्त्रस्यास्य प्रथमो ग्रन्थो वर्तत इति न कस्यचिदपि विदुषोऽत्रकैमर्थ्यापत्तिः। ग्रन्थेऽस्मिन् अद्यत्वेऽम्बाकर्त्री टीकैव समग्रेऽपि ग्रन्थे लभ्यत इत्यहो वैदुष्यं सौभाग्यञ्च नागेशोत्तरवर्तिशाब्दिकानाम्।

टीकायाः अस्याः बहूनि खलु वैशिष्ट्यानि सन्ति विषयतायोग्यानि। किन्तु विस्तारभिया तत्सर्वमत्र च चर्च्यते। सम्बन्धस्वरूपवैशिष्ट्यमेव तट्टीकागतं समुपस्थाप्यत इति नातिविस्तरेण विद्वन्मनोमोदाय।

शब्दार्थयोरस्ति कश्चित् सम्बन्ध इति कथनमात्रेण किं भवति? तस्य स्वरूपमपि निर्धारणीयमिति विचारयता अम्बाकर्त्रीकारेण पद्मश्रीविभूषितपण्डितप्रवरश्रीरघुनाथशर्मणा वाक्यपदीयपदकाण्ड-स्थसमबन्धसमुद्देशस्य व्याख्यावसरेऽम्बाकर्त्रीव्याख्यायामुक्तं यत् सम्बन्धस्य शब्दर्थाभ्यां भिन्ना काचित् स्वतन्त्रसत्ता नास्ति येनेदं वक्तुं शक्नुयाद् यदिदं सम्बन्धस्वरूपम्। अर्थात् शब्दार्थसम्बन्धस्य शब्दार्थाधीनत्वात् स्वतन्त्ररूपेण तस्य निर्देशो नैव भवितुमर्हति–

**नाभिधानं स्वधर्मेण सम्बन्धस्यास्ति वाचकम्।**
**अत्यन्तपरतन्त्रत्वात् रूपं नास्योपदिश्यते॥** इति।

श्लोकव्याख्यावसरे[१] एवमाह अम्बाकर्त्रीकारः– "तत्र सम्बन्धस्य स्वेनासाधारणेन धर्मेण स्वभावभूतेनोपलक्षितस्य प्रत्यायकं षष्ठीव्यतिरिक्तमभिधानं नास्ति। सम्बन्धस्य सदा सम्बन्धिद्वयपरतन्त्रत्वेन धर्मरूपस्य स्वप्रधानतया क्वचिदप्यनिर्देशेन इदन्तया स्वासाधारणधर्मपुस्कारेण स्वरूपानवधारणात्। गुणाः हि शुक्लादयो द्रव्याधीना अपि कदाचित्शुक्लादिशब्देन प्राधान्येनोच्यन्ते। शुक्लं रूपमिति। सम्बन्धस्तु नैवम्, तस्य सदा सम्बन्धिपरतन्त्रत्वाद् इति बोधयितुमत्यन्तग्रहणम्" इति।

---

१. अम्बाकर्त्री, कारिका-४, वाक्यपदीयपदकाण्डसम्बन्धसमुद्देशे

अत्र हेलाराजस्य[१] व्याख्यायामम्बाकर्त्रीकार: एवम् आह-नित्यपरतन्त्रो हि सम्बन्ध: परोपाधि-स्वरूप:=द्विष्ठत्वेन परधर्मभूतस्वरूप:, सम्बन्धिनो: परस्परौन्मुख्यस्वभाव:=परस्परापेक्षानुकूलस्वरूप: धर्ममात्रस्वभाव:। सम्बन्धिद्वयात् पृथगपकृष्य सम्बन्धशब्देन केवलेन स्वप्रधान: कस्यचिद् असाधारणधर्मस्य सम्बन्धिरूपतयाऽभिधीयमानो न साक्षात् स्प्रस्टुम् = अवबोद्धुं शक्यते, अनयोरयं सम्बन्ध: इति। अत: सम्बन्धोऽसंविज्ञानपद: = पदेन संविज्ञातुम् अशक्य:, अत: षष्ठीरूपकार्यमात्रानुमेय:। पदेन संविज्ञातुमशक्यत्वादेव तस्य असाधारणधर्मरूपं लक्षणं न वक्तुं शक्यत" इति[२]।

अनेन अम्बाकर्त्रीकारस्य पूर्वोक्तकथनेन इदं निश्चीयते यद् आचार्यभर्तृहरिमतेन सम्बन्धस्य लक्षणं भवितुमेव नार्हति।

परन्तु नागेशभट्टो वैयाकरणसिद्धान्तलघुमञ्जूषायां सम्बन्धस्य लक्षणं स्वीकृतवान्, तथाहि तस्य सम्बन्धलक्षणम्– "सम्बन्धो हि सम्बन्धिभ्यां भिन्न:, उभयाश्रित:, विशिष्टबुद्धिनियामकश्च" इति। न केवलमेतदेव अपितु नागेशभट्टोत्तरवर्त्तिभ्यां श्रीदुर्बलाचार्यश्रीबालम्भट्टभ्यां स्वकलाकुञ्जि-कानामव्याख्यायां सम्बन्धस्य लक्षणं स्पष्टशब्देषु प्रदर्शित: तथाहि–"सम्बन्धिभिन्नत्वे सति उभयाश्रितत्वे सति विशिष्टबुद्धिनियामकत्वं सम्बन्धत्वम्" इति। अस्य लक्षणस्य हिन्दीव्याख्यायां सरलाख्यायाम् अस्मद्गुरूचरणा: प्रात:स्मरणीया: अभिनवपाणिनिपण्डितप्रवरश्रीरामप्रसादत्रिपाठिवर्य्या: अपि अव्याप्त्यतिव्यप्तिदोषनिवारणपुरस्सरं लक्षणमिदं सम्बन्धस्य निर्दोषमस्तीति स्वीकृतवन्त:[३] इति।

मम शोधस्य विचारणीयोऽयं विषयो यदत्र र्भतृहरि पक्ष: ज्यायान् उत नागेशभट्टो बभ्राम? उभयोर्मध्ये कतरेण भाव्यम्? नागेशभट्टोक्तसम्बन्धलक्षणस्वरूपं कुत्रापि व्याकरणग्रन्थेषु नोपलभ्यते। अत: विद्वद्भिरत्रावश्यं संगतिर्विधेया। व्याकरणेतरनैयायिकादीनां मते लक्षणमिदं सम्बन्धस्य भवतु नाम महाभष्यादिषु अनुपलब्धत्वाद् अस्माकं वैयाकरणानां नेदं सम्बन्धस्वरूपमिति निश्चप्रचम् अस्ति।

---

१. "नित्यपरतन्त्रो हि सम्बन्ध: परोपाधिस्वरूप: सम्बन्धिनो: परस्परौन्मुख्यस्वभावो धर्ममात्रलक्षण:। ततो निष्कृष्य सम्बन्धशब्देन स्वप्रधान: सम्बन्धिरूपतया अभिधीयमान: न साक्षात् स्पृष्टुं शक्यते" इति।

२. वा० प० प० का० सम्बन्ध समु० कारिका-४, अम्बाकर्त्रीकार:।

३. यदि 'सम्बन्धिभ्यां भिन्न:, उभयाश्रित:' अर्थात् दोनों सम्बन्धियों से भिन्न तथा दोनों में आश्रित इतना अंश रहे, तो घट-पट के संयोग सम्बन्ध में तो सम्बन्ध का लक्षण समन्वित हो जायेगा, क्योंकि संयोग में घट-पट दोनों सम्बन्धियों की भिन्नता है, तथा दोनों में वह आश्रित भी है। परन्तु साथ ही इन दोनों से भिन्न द्रव्यत्व सत्ता आदि भी हैं, उनमें भी सम्बन्ध लक्षण की अतिव्याप्ति हो जायेगी।
यदि द्विष्ठ: सम्बन्ध: दोनों सम्बन्धियों में रहने वाला ज्ञतान ही लक्षण रहे, तो घट-पट सम्बन्धिद्वय में आश्रित पूर्वोक्त द्रव्यत्व सत्ता आदि में भी सम्बन्धलक्षण की अतिव्याप्ति हो जायेगी। यदि 'विशिष्टबुद्धिनियामक:' यही अंश लक्षण मान लिया जाय तो दिक् काल, ईश्वर आदि में उस लक्षण की अतिव्याप्ति हो जायेगी, क्योंकि कार्यमात्र में सामानाधिकरण्य होने से ये भी विशिष्ट बुद्धि के नियामक हैं। इति वै० सि० लघुमञ्जूषा, सरलाव्यख्या - पृ. ५८-५९

इदानीं वैयाकरणाभितसम्बन्धस्वरूपं किमिति जिज्ञासा जायते? अतः विचारणीयोऽयं पक्षः। अत्र अम्बाकर्त्रीव्याख्यायाः गभीरनिगूहनायां सत्यामिदमागतं यत् अम्बाकर्त्रीकारेण–

**ज्ञानं प्रयोक्तुर्बाह्योऽर्थः स्वरूपं च प्रतीयते।**
**शब्दैरुच्चारितैस्तेषां सम्बन्धः समवस्थितः।।** इति।

सम्बन्धसमुद्देशस्य प्रथमकारिकाव्याख्यानावसरे तथ्यमिदमुपस्थापितं यत् शब्दानामुच्चारणप्रसङ्गे तत्र तत्वत्रयाणामुपस्थितिर्भवतीति, तेषु प्रथमम् **१. बाह्यार्थस्य अवबोधः** यथा गोशब्दस्य समुच्चारणे सति 'गाय' इति नामकस्य बाह्यजगति विद्यमानस्य पशोः बोधो भवति। द्वितीयं तत्वम् **२. शब्दस्वरूपस्य अवबोधः**- यथा गोशब्दस्य प्रयोगे 'गो' शब्दस्य आनुपूर्व्याः अवबोधो भवति। तृतीयं तत्त्वम् **३. वक्तुरभिप्रायः** वाक्त्रा गोशब्दः 'गाय' इति पशोः बोधाय उच्चारितः इत्यपि ज्ञानं भवति।

तदेव शब्दस्वरूपस्य, बाह्यार्थस्य, तथा वक्तुरभिप्रायस्य च बोधः शब्दाद् भवति। एतत्त्रयेषु परस्परं कश्चिद् वास्तविकः सम्बन्धो यावत् न भविष्यति न तावन्नियमितरूपेण तत्त्वत्रयाणां बोधो भवितुं शक्नोति। अत्र एव अम्बाकर्त्रीव्याख्यायामिदं स्वीकृतं यत् शब्दार्थयोः सम्बन्धः स्वाभाविकतया विद्यमानोऽस्ति।

अयं च सम्बन्धः केनचित् पुरुषेण निर्धारितः (सामयिकः) उत सांकेतिको नास्ति, अपितु अनादिः स्वभावसिद्धः[१] इति। अत्र हेलाराजोऽपि एवमेव आह। प्रयोगेणाभिज्वलितैः शब्दैः त्रितयमवगम्यते। आत्मीयं स्वरूपम्, अर्थश्च फलसाधनः, प्रयोक्तुरभिप्रायश्च। न चैतदसति सम्बन्धे नियमेन घटतः इति वास्तवः सम्बन्धावसायो न सामयिकः शब्दार्थयोः सम्बन्धः अभिधानियमनादनादेः। अत एव समवस्थित इत्याह। स्वभाव एव निरूढ न तु पुरुषेण निवेशितः" इति।

यदा शब्दस्वरूपोपलब्धिर्भवति तदा तत्र बाह्यार्थरूपवस्तुबोध उत कुत्रचित् शब्दविषयकज्ञाने संशयो भवति इति नियमः सर्वत्र दृश्यते। अनेन सिद्धमिदं भवति यद् शब्दार्थविषये अयं नियमः अर्थेन सह शब्दस्य सम्बन्धं बोधयति। अत एव आह भर्तृहरिः–

**प्रतिपत्तिर्भवत्यर्थे ज्ञाने वा संशयः क्वचित्।**
**स्वरूपेषुपलब्धेषु व्यभिचारो न दृश्यते।।**[२] इति।

---

१. जिह्वागोपाग्रमध्यमूलानां कण्ठताल्वादिरूपतत्तत्स्थानाभिघातरूपेण प्रयोगेण स्वजन्यध्वनिद्वाराऽभिज्वलितैः प्रकाशितैः स्फोटरूपैरान्तरैः शब्दैस्त्रिस्त्रितयं प्रतीयते। आत्मनः = शब्दस्य स्वरूपम्, अर्थश्च प्रवृत्तिनिवृत्यन्तररूपस्य फलस्य साधनीभूतः प्रयोक्तृज्ञानं शब्दप्रयोगहेतुभूतम्, तज्जन्यः प्रयोक्तुरभिप्रायश्च प्रयुयुक्षारूपः इति। जानाति, इच्छति, यतते चेष्टते इति क्रमनियमात् इति वा० प० प० का० सम्बन्धसमु० १, कारिका, अम्बाकर्त्रीकारः।

२. वा० प० प० का० सम्बन्धसमु० कारिका – २,

शब्दार्थयोः सम्बन्धस्य सद्भावे किं लिङ्गम् इति जिज्ञासायामेव माह अम्बाकर्त्रीकारः– अस्य शब्दस्य अयमर्थो वाच्यः, अस्य अर्थस्य च अयमर्थो वाचकः इत्येवं षष्ठीविभक्तिप्रयोगादिदं ज्ञातं भवति यद् शब्दार्थयोः सम्बन्धः स्वाभाविकोऽस्ति। षष्ठीविभक्तेः प्रयोगः सम्बन्धमन्तरा न भवति। येषु वस्तुषु एतादृशः स्वाभाविकः सम्बन्धो न भवति न तत्र वाच्यवाचकभावरूपसम्बन्धः अपि भवति, यथा– घटः, पटः इति अम्बाकर्त्रीव्याख्यायां सुस्पष्टमस्ति। अतएव भर्तृहरिणाप्युक्त्–

**अस्याऽयं वाचको वाच्यः इति षष्ठ्या प्रतीयते।**
**योगः शब्दार्थयोस्तत्वमित्यतो व्यपदिश्यते॥**[1] इति।

अतः षष्ठ्याः सकासातत्वं शब्दार्थयोः सम्बन्धस्य स्वरूपमुच्यते। सम्बन्धश्चायं स्वभावात् उपकार्योपकारकयोः उपकारकः भवति। यतः असम्बद्धेषु उपकारस्य सत्ता नैव स्थातुं शक्नोति। यत्र च उपकारकः सम्बन्धोऽस्ति तत्र शक्तिनामकधर्मस्य अनुमानं क्रियते। सम्बन्धोऽयमेव शक्तीनामपि शक्तिरस्ति, अर्थात् गुणानां द्रव्याश्रितत्वं सम्बन्धमन्तरा न सम्भवति। अत एव सम्बधोऽयम् अत्यन्तपरतन्त्रत्वाद् अनुमानाद् ज्ञायते न तु प्रत्यक्षरूपेण इति अम्बाकर्त्रीकारस्य अभिप्रायः। अत एवोच्यते। हरिणापि–

**"उपकारः सः यत्राऽस्ति धर्मस्तत्रानुगम्यते।**
**शक्तीनामप्यसौ शक्तिः गुणानामप्यसौ गुणः॥**[2] इति।

अर्थात् द्वयोः सम्बन्धिनोः परस्परमुपकार्योपकारकभावापन्नयोः उपकारानुमेयः खलु सम्बन्धः, परस्परमसम्बद्धानामुपकारकाऽभावात्। अत्र धर्म इत्युक्त्या सम्बन्धस्य सदा सम्बन्धिपराधीनत्वमभिव्यज्यते। ध्रियमाणस्यैव धर्मत्वदर्शनात्। धर्मित्वे तु तस्य तत्तद्भावानां प्रसिद्धा शक्तिरेव सम्बन्ध इति तु न, शक्तीनामपि आधारपरीधीनत्वेन नियतकार्यजनने च सम्बन्धः एव नियामकत्वात्। तथा सम्बन्ध एव गुणानामपि द्रव्याश्रितत्वव्यस्थापक इति नासौ गुणरूपोऽपि। एव शक्तिगुणादीनां सर्वेषां परतन्त्राणामपि उपकारकत्वात्। उपकारेण सर्वत्र अनुमीयमानस्वरूपसत्वः सम्बन्धो नित्यं परतन्त्र एव इति भावः।

**संयोगसमवाययोः नास्ति सम्बन्धत्वम्–**

आचार्यभर्तृहरिमताऽभिप्रायं प्रगटयन् अम्बाकर्त्रीकारः शब्दार्थयोः मध्ये संयोगसमवायौ सम्बन्धौ न स्तः इति स्वीचकार। सम्बन्धसमुद्देशे षट्संख्याककारिकातः अष्टविंशतिसंख्याककारिकां यावत् भर्तृहरिणा एतदेव निरूपितमिति अम्बाकर्त्रीव्याख्याऽध्ययनानन्तरं मया निश्चीयते।

---

१. वा० प० प० का० सम्बन्धसमु० कारिका – ३
२. वा० प० प० का० सम्बन्धसमु० कारिका – ५

तथाहि– तत्र अम्बाकर्त्रीकारः आचार्यभर्तृहरिमतप्रतिपादनपरः एवमाह यत् सम्बन्धः धर्मरूपोऽस्ति। नित्यपरतन्त्रता एव सम्बन्धस्य लाक्षणिको धर्मः। सम्बन्धस्य नित्यपरतन्त्रतामादायैव संयोगसमवाययोः मुख्यसम्बन्धत्वखण्डनं भर्तृहरिणा कृतम्।

भर्तृहरेः कथनमस्ति यत् संयोगसमवायौ सम्बन्धौ न स्तः, अपितु सम्बन्धधर्माणौ स्तः इति अम्बाकर्त्रीकाराभिप्रायः[१]।

सम्बन्धस्य पारतन्त्र्यधर्मः संयोगे तथा समवायेऽपि दृश्यते। एतावपि द्रव्यगुणादिषु परतन्त्रभावेन स्थितौ स्तः। एतत्परतन्त्रतासामान्यात् एतौ सम्बन्धौ उच्येते। हेलाराजेनापि अत्र स्वसम्मतिः प्रदर्शिता[२]।

एतयोरपि स्वोपकारकप्रतिनियतोपाधयः तेषां भवन्ति येषामेतौ संयोगसमवायावुपकार्यौ भवतः, उपकार्यदशायाञ्च प्रधानत्वान्नतु परतन्त्रत्वेन, स्वतन्त्रे रूपे परिच्छिन्नावेव विवक्षितौ भवतः। तदेवं सम्बन्धस्य मौलिकलाक्षणिकपारतन्त्र्यधर्मात् प्रच्युतत्वात् एतौ संयोगसमवायौ स्वतन्त्रघटपटाविव भवतः। अतः एतयोः परतन्त्रता सार्वत्रिकी नास्ति अपितु कादाचित्की एव अस्ति अर्थात् नित्या नास्ति।

सम्बन्धश्च पुनः नित्यपरतन्त्रो भवति। अत एव एतौ संयोगसमवायौ सम्बन्धौ नैव भवितुं शक्नुतः, इति अम्बाकर्त्रीकारस्याभिप्रायः। अत एव आह भर्तृहरिः–

**तद्धर्मणोस्तु ताच्छब्द्यं संयोगसमवाययोः।**
**तयोरप्युपकारार्था नियतास्तदुपाधयः।।**[३] इति।

न्यायवैशेषिकदर्शने अस्मादपि कारणात् शब्दार्थयोः सम्बन्धः नास्ति यतः वैशेषिकदर्शने शब्दः आकाशस्य गुणोऽस्ति। यस्य शब्दाद् बोधो भवति तत् साधारणतया द्रव्यं भवति। द्रव्यगुणयोः परस्परं संयोगसम्बन्धो भवितुमेव नार्हति। अत्र च समवायसम्बन्ध एव भवितुं शक्नोति।

किञ्च शब्दो गुणः, संयोगोऽपि गुणोऽस्ति, गुणद्वयोः परस्परं संयोगसम्बन्धो भवितुमेव नार्हति। गुणाः द्रव्येषु भवन्ति न तु गुणेष्वपि। गुणाः गुणेष्वनङ्गीकारात्। अतः शब्दस्य गुणत्वात्, गुणद्वयोश्च सम्बन्धः संयोगो नैव भवति।

किञ्च शब्दोऽत्र दर्शने सर्वदा निष्क्रियः अर्थात् क्रियारहितः अस्ति। नित्यविभुद्रव्यं विहाय संयोगस्य कृते एतदावश्यकं भवति यदुभयोः सम्बन्धिनोः मध्ये एकस्मिन् तु क्रिया अवश्यं भवेदिति। आकाशोऽपि निष्क्रियः, शब्दोऽपि तथैवास्ति तर्हि उभयोर्मध्ये कथं संयोगसम्बन्धः भवितुमर्हति? अतः

---

१. वा० प० प० काण्डसम्बन्धसमुद्देशः, कारिका-१२, अम्बाकर्त्री
२. "सयोगसमवायावेव नेह सम्बन्धौ यथा अन्येषां दर्शनम्" इति वा० प० प० का० सम्बन्धसमुद्देशः, कारिका-१२
३. वा० प० पदकाण्ड, सम्बन्धसमुद्देशः, कारिका - ६

शब्दार्थयोर्मध्ये संयोगसम्बन्धः उत समवायसम्बन्धो नैवास्ति। यथा दण्डी, एकाक्षः इत्यादिषु उदाहरणेषु दण्डेन सह संयोगसम्बन्धस्य तथा चक्षुषा सह समवायसम्बन्धस्य ज्ञानं भवति। परन्तु शब्दर्थयोः विषये एतादृशः प्रयोगो नैव भवितुमर्हति यथा– घटः, चक्षुः। अतः शब्दार्थयोः नास्ति संयोगसम्बन्धो नापि समवायसम्बन्धः।

इदानीं वैयाकरणानां मते शब्दार्थयोर्मध्ये कः सम्बन्धः? तर्हि श्रूयताम्–

वाक्यपदीयब्रह्मकाण्डे अम्बाकर्त्रीव्याख्यायां सुस्पष्टमस्ति यत् शब्दार्थयोः सम्बन्धः द्विप्रकारकोऽस्ति। तथैवाह तत्र भर्तृहरिः– "कार्यकारणभावेन योग्यभावेन च स्थिताः" [1]इति। योग्यताकार्यकारणभावयोः एतयोः सम्बन्धद्वयोः तत्र चर्चा कृता दृश्यते, निरूपणं तु पदकाण्डे सम्बन्धसमुद्देशे दृश्यते।

**योग्यतासम्बन्धः**

भर्तृहरेरभिप्रायं विस्फोरयता अम्बाकर्त्रीकारेण शब्दार्थयोः योग्यतासम्बन्धं निरूपयता एवमुक्तं यत् यथा– चक्षुरादिषु इन्द्रियेषु रूपादिग्रहणस्य तथा च रूपादिविषयकं ज्ञानमुत्पादयितुं स्वाभाविक-योग्यताऽस्ति, तथैव शब्देऽपि स्वाभाविकयोग्यता अस्ति यत् शब्दः उच्चारणात् अर्थस्य बोधं कारयति। इयं योग्यता एव सम्बन्धोऽस्ति। अस्याः पर्यवसानमन्ततः तादात्म्ये एवाऽस्ति[2]। तथाह भर्तृहरिः–

**इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता यथा।**
**अनादिरर्थैः शब्दानां सम्बन्धो योग्यता तथा॥** इति।

शब्दः समवायसम्बन्धस्य उत संयोगसम्बन्धस्य अपेक्षां विनैव उच्चारणमात्रेण अर्थबोधं कारयति। अत एवं इयं शब्दस्य अकृत्रिमा शक्तिरित्युच्यते।

चक्षुरादिषु रूपदर्शनशक्तिः कमपि पुरुषविशेषं न अपेक्षते। एवमेव शब्दोऽपि अर्थबोधकतायै कमपि नापेक्षते। प्रकाश्य-प्रकाशकभावसम्बन्धात् यथा इन्द्रियविषययोः सम्बन्धस्य ग्रहणं भवति एवं शब्दवस्तुनोः सम्बन्धज्ञानम् उभयोः प्रकाश्यप्रकाशकयोग्यतातः भवति।

अस्याः योग्यतायाः फलमिदमस्ति यद् यथा चक्षुः इन्द्रियं रूपस्य एव ग्रहणं करोति, तथा रसना रसस्य एव ग्रहणं करोति। एवमेव प्रत्येकं शब्दोऽपि प्रत्येकार्थस्य बोधं कारयित्वां विशेषशब्दाः विशेषार्थान् एव बोधयन्ति। येषु अर्थेषु नियमितरूपेण ये शब्दाः प्रसिद्धाः सन्ति, तेषामर्थानामेव ते ते शब्दाः नियमितरूपेण बोधं कारयन्ति।

---

१. वा० प० ब्रह्म का० कारिका - ३५

२. 'यथा इन्द्रियाणां चक्षुरादीनां स्वविषयेषु रूपादिषु अनादिर्योग्यतैव सम्बन्धः, तथा अर्थैः सह शब्दानामनादिर्योग्यतैव सम्बन्धः। सा चान्ततः आध्यासिकतादात्म्यरूपे सम्बन्धे एव पर्यवस्यतीति' अम्बाकर्त्री, वा० प० प० का० सम्बन्धसमुद्देशः कारिका - २९

कथनस्य तात्पर्यमिदमस्ति यद् गौरश्वः इत्यादिशब्दाः अनादिपरम्परातः समायाताः विद्यन्ते, तथा एतेषां सम्बन्धः प्रसिद्धोऽस्ति। एते स्वाभाविकयोग्यतया स्वनिश्चितार्थानाम् एव बोधं कारयन्ति। गौरिति शब्दाद् अश्वस्य बोधो नैव भवितुमर्हति नापि अश्वाद् गोः बोधो भवति। सम्बन्धशब्देन यस्य सम्बन्धस्य बोधः कार्यते स एव योग्यतारूपः सम्बन्धोऽस्ति।

अस्य योग्यतासम्बन्धस्य ज्ञानं शब्दस्य अर्थबोधकयोग्यतया एव भवति इति अम्बाकर्त्रीकारः[१]। एतत्सर्वं मनसिकृत्य भर्तृहरिः स्वयमेवाह–

**सम्बन्धशब्दो सम्बन्धो योग्यतां प्रतियोग्यता।**
**समयात् योग्यता संविन्मातापुत्रादियोग्यवद्।।**[१] इति।

ननु यदि अयं सम्बन्धः स्वाभाविकोऽस्ति तर्हि शब्दादर्थस्य ज्ञानं सर्वदा एव कथं न भवति? इति जिज्ञासायां भर्तृहरिणा सम्यगुक्तं यत् योग्यतायाः ज्ञानं समयात् अर्थात् संकेताद् भवति। यथा माता-पुत्रादीनां सम्बन्धज्ञानं सङ्केताद् भवति। शब्दस्य अर्थविषये व्यापारः अनादिकालादस्ति। अस्याः स्वाभाविकयोग्यतायाः ज्ञानं वृद्धव्यवहाराद् उत परम्परातः क्रियते। सङ्केतेन तेषु अविद्यमानसम्बन्धस्य प्रादुर्भावो न क्रियते, नाप्येतदुचितमस्ति। यथा पितापुत्रयोः जन्यजनकभावसम्बन्धो विद्यमानोऽस्ति। तस्य विद्यमानसम्बन्धस्य एव सङ्केतेन बोधः कार्यते यदयमस्य जनकः, अयं चास्य पुत्रः इति।

**कार्यकारणसम्बन्धः**

आचार्यभर्तृहरेरभिप्रायं प्रकटयन् अम्बाकर्त्रीकारः शब्दार्थयोः द्वितीयः सम्बन्धः कार्यकारणरूपो भवतीति प्रतिपादयति। शब्दार्थौ परस्परं कार्यकारणे स्तः। योग्यतासम्बन्धः शब्दस्य अर्थबोधकताशक्तिमुद्भावयति। तथा कार्यकारणतासम्बन्धः शब्दानां व्यावहारिकशक्तिमुद्भावयति।

शब्दसाधनेन एव वक्ता स्वभावान् श्रोतारं प्रति प्रेषयति। अत एव भर्तृहरिणा उक्तं यत् शब्दः अर्थस्य कारणमस्ति अर्थात् श्रोतुः बुद्धौ यः अर्थः विद्यमानोऽस्ति तस्य कारणं शब्दः। शब्देन श्रोतुः बुद्धिगतः अर्थः जागृतो भवति। बुद्धौ पूर्वस्माद् विद्यमानाद् अर्थात् एव शब्दस्य ज्ञानं भवति। अतः अर्थः ज्ञानं कारयति। अत आह भर्तृहरिः–

**शब्दः कारणमर्थस्य स हि तेनोपजन्यते।**
**तथा च बुद्धिविषयादर्थाच्छब्दः प्रतीयते।।**[२]

शब्दस्य अर्थः बाह्यजगति विद्यमानो वस्तुरूपो भवति। शब्दार्थौ बुद्धौ पूर्वस्मादभिन्नरूपेण स्थितौ स्तः विवक्षितोऽर्थः शब्दभेदाद् रहितो न भवतिः। तत्र भेदो भवति। स बुद्धौ संकल्परूपेण

१. वा० प० प० काण्ड सम्बन्धसमुद्देशः, कारिका - ३१
२. वा० प० प० काण्ड सम्बन्धसमुद्देशः, कारिका - ३२

अवस्थितो भवति। तथा च तस्य प्रतिभया ज्ञानं भवति। अत एव ताल्वादिस्थानव्यापाराद् अभिव्यक्तं शब्दं श्रोता यदा शृणोति तदा सः अर्थबोधं धारयति।

प्रतिपाद्यप्रतिपादकयोः परस्पराभिप्रायानुप्रवेश एव व्यवहार इत्युच्यते। अर्थात् शब्दार्थयोः तादात्म्यज्ञानकरणमेव व्यवहारः। व्यवहारे वक्ताश्रोतारौ कथमर्थस्य आदान-प्रदाने कुरुतः इति जिज्ञासायां हेलाराजेनोक्तमस्ति यद् अर्थः वक्तुः बुद्धौ स्थितो भवति। सः तं बुद्धिगतमर्थमुच्चारणद्वारा श्रोतारं समर्पयति। तथा श्रोताऽपि तथैव स्वभावनया युक्तो भवति तथा स्वस्वाभाविकयोग्यतया तं गृह्णति शब्द-ग्रहणाच्च तस्य शब्दविषयकसंस्काराः उद्‌बुद्धाः भवन्ति। तदनुसारं सः प्रवृत्तो भवति।

**सङ्केतो नास्ति सम्बन्धः**

अम्बाकर्त्रीव्याख्यां सम्यग् आस्वाद्येदं वक्तुं शक्यते यद् भर्तृहरिणा सङ्केतसम्बन्ध-वादिनां खण्डनं कृतमस्ति।

भतृहरिणा स्पष्टमुक्तं यद् बाह्यार्थो नित्यः स्यादुतानित्यः, परन्तु शब्दार्थयोः सम्बन्धः यावत् पूर्वस्माद् न भवेद् न तावन् संकेतो भवितुमर्हति।

तथाहि–

**नित्येऽनित्येऽपि बाह्येऽर्थे पुरुषेण कथंचन।**
**सम्बन्धोऽकृतसम्बन्धैः शब्दैः कर्तुं न शक्यते।।**[१] इति।

कथनस्य तात्पर्यमिदमस्ति यत् सङ्केतस्तावन्नैव भवितुमर्हति यावत् शब्दार्थयोः सम्बन्धज्ञानं न स्यात्। शब्दार्थयोः स्वाभाविकसम्बन्धस्य स्वीकृतिं विना (ज्ञानं विना) सङ्केतवादस्य आरम्भ एव न भवति।

अत्र संक्षेपेणैव शब्दार्थसम्बन्धस्य स्वरूपम् अम्बाकर्त्रीव्याख्यासन्दर्भे प्रपञ्चितम्, सम्बन्ध-विषयिणी अन्या चर्चा अत्र न चर्चिता। इति शम्।

---

१. वा० प० प० का० सम्बन्धसमुद्देशः

# संस्कृतकाव्ये रसानामलङ्काराणां छन्दसाञ्च अन्तःसम्बन्धः

**प्रो० हरिदत्तशर्मा**

संस्कृतकाव्यं नाम विविधानां काव्यतत्त्वानां सुन्दरं सङ्कलनम्। आरम्भादेव संस्कृतकाव्यं भूलमनोभावानां रसानाञ्च पृष्ठभूमौ विकसितम्, यतो हि संस्कृत-काव्यशास्त्रे रससिद्धान्तः प्रादुर्बभूव। रससिद्धान्तः संस्कृत-काव्यशास्त्रस्य विशिष्टा उपलब्धिरासीत्। शब्दार्थरूपं संस्कृतकवितायाः शरीरं विविधैरलङ्कारैः सुसज्जितं बभूव, इयं नववनिता च एभिरलङ्करणैः अधिकाधिका सुन्दरी अदृश्यत। इयं कविता च सङ्गीतमधुराणां छन्दसां पादाभ्यां संस्थिता, छन्दोवैविध्यमेव कवितायाः रूपवैविध्यं जातम्। पृथक्-पृथग्धारासु प्रवहन्ति तत्त्वानीमानि निश्चितमेव अन्तःसम्बन्धं कमपि धारयन्ति। कदाचिद् एकं तत्त्वमपरस्य पूरकं भवति, कदाचित् तत्त्वद्वयम् अन्योन्यं पोषयति। अलङ्कारः रसं कमपि पोषयितुं शक्नोति, विशिष्टं किमपि छन्दोनिबन्धनं रसविशेषं निष्पादयितुं शक्नोति।

अस्मिन् विषये संस्कृत-काव्यशास्त्रीयं मतं विमृश्येत चेत् तदा स्पष्टं भवति यद् रसानाम-लङ्काराणाञ्च परस्परं अलङ्कार्यालङ्कारकसम्बन्धः सुस्थितः। अलङ्कारो रसपोषको भवति। रसा भावाश्च कल्पनामुत्थापयन्ति, कल्पना च आलङ्कारिकीम् अभिव्यञ्जनां कल्पयति। अस्मिन् विषये अतिस्पष्टतयोक्तं हि प्रथितेनाचार्येण आनन्दवर्धनेन–

> **अलङ्कारान्तराणि हि निरूप्यमाणदुर्घटनान्यपि रसस-**
> **माहितचेतसः प्रतिभानवतः कवेरहंपूर्विकया परापतन्ति।**[1]

भावभरिता विषया कवेः प्रयत्नेनैव अलङ्कारमया जायन्ते। अलङ्कारा आभूषणानीव तदैव काव्यशोभां वर्धयितुं क्षमा यदा ते भावेषु जीवनशक्तिं स्थापयन्ति। अत्रापि वयं आनन्दवर्धनस्य विचारसरण्याः समीप एव स्थिताः, येनोक्तम्–

> **रसभावादितात्पर्यमाश्रित्य विनिवेशनम्।**
> **अलङ्कृतीनां प्सर्वासामलङ्कारत्वसाधनम्।।**[2]

---

१. ध्वन्यालोकः २.१६ वृत्तिः

२. तदेव २.५ वृत्तिः

अस्य विचारस्य उदाहरणं दीयेत चेत्, तर्हि वयं वाल्मीकिरामायणस्य सुन्दरकाण्डस्य सन्दर्भं पश्यामो, यत्र वानरराजो हनुमान् यदा सीतामवलोकयति, तदा कविः एकोनत्रिंशत् उपमानां परम्परां प्रयुङ्क्ते। अत्र प्रत्येकमुपमा विरहविधुरायाः सीतायाः कारूणिकीं दयनीयां च दशामभिव्यनक्ति। अतोऽत्र उपमा विरहभावस्योन्नयनकारिणी जाता। इत्थं पृथग्भूता अपि रसालङ्कारा अन्तःसम्बद्धाः तथा च च्छन्दोविधानविशेषेण योजिता भूत्वा सहृ पयानां हृदयेषु काव्यप्रभावं प्रख्यापयन्ति।

रसालङ्कारयोरन्तःसम्बन्धः शब्दालङ्कारे अनुप्रासे स्फुटं दृश्यते। अनुप्रासशब्दः अनु-प्र-आसरूपाणां त्रयाणां शब्दानां समन्वयः, यस्यार्थ काव्ये रस-भावानुकूलानां वर्णानां न्यासः सुनियोजनम्, यथोक्तं मम्मटेन काव्यप्रकाशे- "रसाद्यनुगतो रसविषयो व्यापारः"[१] अर्थात् रसानुरूपं वार्णानां प्रकृष्टो न्यास एव अनुप्रासः। कस्मिंश्चित् काव्ये तेषामेव वर्णानामावृत्तिः श्रवणयोः मधुरं लयमयं ध्वनिमुत्पादयति। पुनर्वृत्यनुप्रासप्रसङ्गे वृत्तिं व्याचक्षमाणो मम्मटः कथयति- "वृत्तिर्नियतवर्णगतो रसविषयो व्यापारः"[२] अर्थात् वृत्तिर्विशिष्टानां वर्णानां सव्यापारो यो रसाभिव्यञ्जनां साधयति। वृतीनाम् उपनागरिका-परुषा-कोमलारूपेण यत् त्रैविध्यं वर्तते, तदपि रसानुरूपमेव, यथा उपनागरिका शृङ्गार-करुणरूपयोः कोमलरसयोः, परुषा वीररोद्ररूपयोः रसयोः, कोमला च हास्याद्भुतादिरूपेषु रसेषु दृश्यते। इदं सङ्घटनं निश्चितरूपेण वाञ्छितं भावं जागरयति। न स्यादेतत्, तदा तत्र प्रवर्तितस्य भावस्यास्वादो क्षयमेष्यति। यथा रतिभावप्रसङ्गे कठोराणां व्यञ्जनानां, क्रोधभावप्रसङ्गे च कोमलानां व्यञ्जनानां प्रयोगस्तां तां भावानुभूतिं भारयिष्यति। प्रस्तुते जयदेवप्रणीते गीते कोमलवर्णानां न्यासो नूनमेव शृङ्गाररसास्वादं जनयितुं क्षमः-

**ललित-लवङ्ग-लता-परिशीलन-कोमल-मलय-समीरे।**
**मधुकर-निकर-करम्बित-कोकिल-कूजित-कुञ्ज-कुटीरे।।**

**विहरति हरिरिह सरसवसन्ते**
**नृत्यति युवतिजनेन समं सखि विरहिजनस्य दुरन्ते।**[३]

अपरपक्षे कठोरवर्णानां कठोरध्वनीनाञ्च समवायेन वीररस्यः समृद्धिमधिगच्छति, यथा वेणीसंहारगतेऽस्मिन् पद्ये-

---

१. काव्यप्रकाशः ९.७९ वृत्तिः
२. तदेव ९.८० वृत्तिः
३. गीतगोविन्दम्, सगी- १, गीतम्-३

**मन्थायस्तार्णवाम्भः प्लुतकुहरचलन्मदरध्वान-धीरः**
**कोणाघातेषु गर्जत्प्रलयघनघटाऽन्योन्यसङ्घट्टचण्डः।**
**कृष्णाक्रोधाग्रदूतः करुकुलनिधनोत्पात-निर्घात वातः**
**केनास्मत् सिंहनाद-प्रतिरसितसखो दुन्दभिस्ताडितोऽयम्।।**[1]

शब्दगुम्फनं स्वयमेव अर्थव्यञ्जनं करोति। इत्थं संस्कृतकाव्यस्य विविधेषु सन्दर्भेषु रसालङ्कारयोः रुचिरः समन्वयः प्राप्यते। वयमवलोकयामो यत् अनुप्रासस्य विशिष्टं रूपम् अन्त्यानुप्रासः संस्कृतकाव्ये नाधिकं प्रचलितः सन्नपि आदिकाव्ये कथमपि स्थितिमवाप। एतद्विधं कायं रसालङ्कारयोरलङ्कारच्छन्दसोश्च तत्त्वयोः सुन्दरमुदाहरणम्। ध्यातव्यमस्ति एतद्विधं काव्यं प्रथमं वाल्मीकिरामायणे प्राप्तं यथा–

**ततः स मध्यङ्गतमंशुमन्तं ज्योत्स्ना-वितानं महदुद्वमन्तम्।**
**ददर्श धीमान् दिवि भानुमन्तं गोष्ठे वृषं भन्तमिव भ्रमन्तम्।।**[2]

**हंसो यथा राजतपञ्जरस्थः सिंहो यथा मन्दरकन्दरस्थः।**
**वीरो यथा गर्वित कुञ्जरस्थश्चन्द्रोऽपि बभ्राज तथाम्बरस्थः।।**[3]

छन्दोविशेषबद्धः प्रतिचरणान्तं निबद्धोऽयमनुप्रासः काव्ये विचित्रं सौन्दर्यमादधाति। संस्कृतकाव्ये दर्शनीयोऽयं विकासः परिलक्ष्यते यदन्त्यानुप्रासः भक्तिमयेषु पद्येषु अधिकाधिकं प्रयोगविषयो जातः। नैकानि भक्तिगीतानि अनेन विधानेन रचितानि। गीतगोविन्दस्य गीतेषु रसालङ्कारच्छन्दोरूपाणां त्रयाणामपि तत्त्वानां मनोरमः समन्वयः प्राप्यते। एषु हि मृदुलसुकुमारः प्रेमभावः, अनुप्रासानाम् अविरलपरम्परा, छान्दसरागाणां मधुरं सङ्गीतञ्च त्रिगुणितम् आनन्दात्मकं प्रभावम् उत्पादयन्ति। यथाऽस्मिन् गीते–

**चन्दन-चर्चित-नील-कलेवर-पीत-वसन्-वनमाली।**
**केलि-चलन्मणि-कुण्डल-मण्डित-गण्डयुग-स्मितशाली।।**

**हरिरिह मुग्धवधूनिकरे**
**विलासिनि विलसति केलिपरे।**[4]

एतद्विधासु सरसासु गीतिषु रसालङ्कारच्छन्दांसि त्रीण्येव तत्त्वानि परस्परं पोषयन्ति, येन गीतिकवितेयम् उच्चशिखरमारोहति।

---

१. वेणीसंहारम् १.२२
२. रामायणम्, सुन्दरकाण्डम् ५.१
३. वाल्मीकिरामायणम् सुन्दरकाण्डम् ५.४
४. गीतगोविन्दम्, सर्गः- १, गीतम्-४

अतिरोचकोऽयं विषयो यत् संस्कृत-भक्तिकाव्यं विशेषरूपेणाधिकाधिकं विचित्ररूपैर्गीत्यात्म-कच्छदोभिर्युक्तं जातम्, यत्रान्त्यानुप्रासोऽयं व्यापकरूपेण प्रयुज्यते। नैकानि उदाहरणानि दातुं शक्यन्ते यत्र तत्त्वत्रयमेतत् युगपत् कार्यकारि। तेष्वन्यतमं वर्तते श्रीशङ्कराचार्यकृतं 'श्रीकृष्णाष्टकम्' यथोदाहरणम्–

**भजे व्रजैकमण्डनं समस्ततापखण्डनम् स्वभक्तचित्तरञ्जनं सदैव नन्दनन्दनम्।**
**सुपिच्छगुच्छमस्तकं सुनादवेणुहस्तकम् अनङ्गरङ्गसागरं नमामि कृष्णनागरम्।।**[1]

ध्यातव्यमिदं तथ्यं सद् भक्तिरसो मात्रिकेषु छन्दस्सु उचिततरं स्थानमाप्तवान्, तानि छन्दांस्यपि अन्त्यानुप्रास-समन्वितानि सन्ति, येन भक्तः स्वाराध्यसमक्षं भक्तिगीतानां गानेन गहनतया स्वभक्तिं प्रकटयेत्। श्रीशङ्कराचार्यकृतं 'भजगोविन्दम्' इति गीतं अस्या विधाया उत्तमम् उदाहरणम्–

**भज गोविन्दं भज गोविन्दं, गोविन्दं भज मूढमते।**

**पुनरपि जननं पुनरपि मरणं पुनरपि जननीजठरे शयनम्।**
**इह संसारे खलु दुस्तारे कृपया पारे पाहि मुरारे।।**[2]

**भज गोविन्दं ...............**

भावभरिते गीतेऽस्मिन् इदमेव वैशिष्ट्यं लक्ष्यते–

**एहि मुरारे कुञ्जविहारे एहि प्रणतजनबन्धो।**
**हे माधव मधुमथन वरेण्य केशव करुणासिन्धो।।**

**रासनिकुञ्जे गुञ्जति नित्य भ्रमरशतं किलं कान्त।**
**त्वामिह याचे दर्शनदानं हे मधुसूदन शान्त।।**

सुविदिते 'मधुराष्टकम्' इत्यभिधाने गाने तदेव समन्वयतत्त्वं दृश्यते। रसालङ्कारच्छन्दसां सामञ्जस्यमभिलक्ष्य नैकानीदृशान्युदाहरणानि स्तोत्रकाव्येभ्यः उद्धर्तुं शक्यन्ते।

अलङ्कारस्य छन्दसश्च अन्तःसम्बन्धस्य सुन्दरमुदाहरणं प्रकृतिवर्णनपरेषु काव्येषु कुत्रचिद् दृश्यते, यत्र यमकालङ्कारस्य द्रुतविलम्बितच्छन्दसश्च रुचिरः सङ्गमः प्राप्यते। एवंविधं सुमनोहरं काव्यं प्रथमं कविकुलगुरोः कालिदासस्य रचनारूपेण दृश्यते, यदा स वसन्तकालस्य आगमनं वर्णयति। अलङ्कारच्छन्दसोः समन्वयः रसस्य आधारे आधृतः। वसन्तर्तोः वर्णनं कोमलस्य रविभावस्य पृष्ठभूमौ वर्तते। कालिदासीयकाव्यस्य एषु अंशेषु वयं भावसञ्चरणस्य लयसन्तरणस्य च यौगपद्यम् अनुभवामः–

---

१. स्तोत्ररत्नावली, 'श्रीकृष्णाष्टकम्' पद्ये - १, २
२. तदेव, 'चर्पटपञ्जरिकास्तोत्रम्' पद्ये १, ९

**कुसुमजन्म ततो नवपल्लवास्तदनु षट्पदकोकिलकूजितम्।**
**इति यथाक्रममाविरभून्मधुर्दुभवतीमवतीर्य वनस्थलीम्।।**

**अमदयन् मधुगन्धसनाथया किसलयाधरसङ्गतया मनः।**
**कुसुमसम्भृतया नवमल्लिका स्मितरुचातरुचारुविलासिनी।।**[१]

वयमवलोकयामो यद् द्रुतविलम्बितच्छन्दसि लयः प्रथमं द्रुतं भवति पश्चाच्च विलम्बितम्। क्षिप्रमन्दयोः गत्योः क्रमोऽयं आवृत्तिरूपेण गोचरीभवति। इयं छन्दसी मनोहरा सङ्गितधारा आनन्दस्य पराकाष्ठां प्राप्नोति, यदा पद्यमिदं चतुर्थचरणपर्यन्तं गीयते, यत्रैकं सुन्दरं यमकं वरीवर्ति। अस्मिंश्छन्दसि द्रुत-विलम्बितगत्या शब्दानां दोलनं लयात्मकसौन्दर्यस्य पराकाष्ठां प्राप्नोति, वर्णानां शब्दानां वावृत्तिः श्रवणयोरानन्दं जनयति। सङ्गीतसौन्दर्यं प्रकृतिसौन्दर्येण सङ्गमितीभूय द्विगुणितम् आनन्दप्रवाहं प्रवाहयति। यमकालङ्कार-द्रुतविलम्बितच्छन्दसोरिदं सहावस्थानं संस्कृतकविषु परमं लोकप्रियं जातम्, अपरैश्च कविभिस्तद् अनुकृतम्। कालिदासोत्तरकाले महाकविना माघेनेयं रचनाशैली प्रयोगविषयीकृता। तेनापि तमेव समन्वयमादाय वसन्तवर्णनं कृतम्–

**मधुरया मधुबोधितमाधवीमधु-समृद्धिसमेधितमेधया।**
**मधुकराङ्गनया मुहुरुन्मदध्वनिभृता निभृताक्षरमुज्जगे।।**[२]

वयं पश्यामो यत् यमकप्रयोगो यः कालिदासेन पद्यचतुर्थपादे प्रवर्तितः, स माघेनः पद्यस्य प्रायेण चतुर्ष्वेव चरणेषु प्रयुक्तः, सहृदयैश्च संवर्धितरुच्या सः गृहीतः प्रशंसितश्च। तत्त्वद्वयस्य मिश्रणमिदं नात्रैव रुद्धम्। इदं भट्टिकवेः भट्टिकाव्ये रत्नकरकवे हरविजयकाव्ये च प्राप्यते। आधुनिक-संस्कृतकविना रामावतारशर्मणाऽपि वसन्तवर्णनप्रसङ्गे इयमेव समन्वयशैली अङ्गीकृता। इत्थं वसन्तवर्णनं यमकालङ्कारेण द्रुतविलम्बितच्छन्दसा चान्तःसम्बद्धं जातम्। विचित्रमिदं सामञ्जस्यं संस्कृतकाव्यस्य अन्यतमं वैशिष्ट्यं सञ्जातम्। एतत्समन्वयसमानतया यमकालङ्कारस्तोटकच्छन्दसाऽपि सम्बद्धो भवति, कर्णयोः पुनर्हृदये चापूर्वमानन्दं ददाति, यथा भट्टिकवेः पद्यद्वयमिदम्–

**सरसां सरसां परिमुच्य तनुं पततां पततां ककुभो ककुभः।**
**सकलैः सकलैः परितः करुणै रुदितै रुदितैरिव खं निचितैः।।**

**न गजा नगजा दयिता दयिता विगतं विगतं ललितं ललितम्।**
**प्रमदा प्र-मदा महता महता म-रणं मरणं समयात् समयात्।।**[३]

---

१. रघुवंशमहाकाव्यम् १.२६, ४२
२. शिशुपालबधमहाकाव्यम् ६.२०
३. भट्टिकाव्यम् १०.४, ९

अत्र वयं पश्यामो यत् सगणरूपेण त्रिभिः त्रिभिरक्षरैः निबद्धाः शब्दा यमकालङ्कारे सुस्थाप्यन्ते जनांश्च आनन्दयन्ति।

इदं हि सुस्थापितं तथ्यं यत् छन्दःशास्त्रकारिणः आचार्याः निश्चितरूपेण धारणामिमां धारितवन्तो यत् कानि कानि विशिष्टानि छन्दांसि भावविशेषमुद्दीपयितुं समर्थानि। भरतः क्षेमेन्द्रश्च तानि स्वस्वग्रन्थे नाट्यशास्त्रे सुवृत्ततिलके च व्याख्यातवन्तौ। विविधानां भावानाम् अभिव्यञ्जनायै प्रायेण सर्वाण्येव छन्दांसि प्रयोक्तुं शक्यन्ते, कस्यापि भावस्य अभिव्यक्त्यै कस्यापि छन्दसः अनिवार्यता न विद्यते, तथापि कविभिः प्रवर्तिताः सन्ति काश्चित् प्रवृत्तयः। केषाञ्चिच्छन्दसां भावविशेषव्यञ्जने इयती प्रबला शक्तिरभूत् यत्तानि छन्दांसि तद्भावव्यञ्जनायै प्रतीकरूपाणि जातानि। यथा आर्या जातिः सरलहृदयानां सामान्यलोकानां मधुर-मृदुलरागवृत्तेः प्रकाशिका जाता। तर्हि आर्या लोकचेतनाया लोकसंस्कृतेश्च प्रतीकमभवत्। वियोगिनीवृत्तं प्रियजनस्यात्यन्तिकवियोगानन्तरं करुणाक्रन्दनस्य प्रतीकं जातम्। मन्दाक्रान्ता गुरुवर्णप्रयोगबहुलं गम्भीरं वृत्तम्। यदा कविताकामिनीविलासेन कालिदासेन मेघदूते दोलाधिरूढेनेव मधुरमधुरेण रागेण मन्दाक्रान्तावृत्तेन गहनवेदनाभरितस्य विरहभावस्य वर्णनं कृतं ततः मन्दाक्रान्ता विरहव्यञ्जनायाः कृते सिद्धैव जाता। मेघदूतस्य पद्यमेकं पर्याप्तमुदाहरणम्–

**तां जानीथाः परिमितकथां जीवितं मे द्वितीयं**
**दूरीभूते मयि सहचरे चक्रवाकीमिवैकाम्।**
**गाढोत्कण्ठां गुरुषु दिवसेष्वेषु गच्छत्सु बालां**
**जातां मन्ये शिशिरमथितां पद्मिनीं वाऽन्यरूपाम्।।**[१]

अत्र ध्यातव्यं यत् कविना उपमाद्वयं कल्पितमस्ति प्रथमं, विरहिणी सा एकाकिनीभूता चक्रवाकीव लक्ष्यते, द्वितीयं, सा शिशिरमथिता पद्मिनीव लक्ष्यते। विरहविधुराया यक्षिण्या विह्वलताऽत्र उपमाभ्यामधिकगहनतया व्यज्यते। अतोऽत्र उपसंहर्तुं शक्यते यत छन्दांसि नूनमेव काव्यसौन्दर्यसम्पादनाय प्रयुज्यन्ते। भावानां रसानाञ्च गहनानुभवाय विविधा अलङ्काराः प्रयुज्यन्ते। कालिदासकृतोऽयं प्रयोगः परवर्तिकवीनां कृते इयदधिकं प्रेरणास्पदं जातं यत् तैरनेकैः मन्दाक्रान्तयैव दूतकाव्यानि सन्देशकाव्यानि वा रचितानि। मन्दाक्रान्ता विरहव्यञ्जिकारूपेण सहृदयानां हृदयहारिणी जाता।

विप्रलम्भशृङ्गाररसः श्रीमद्भागवते मालिनीछन्दसा उपयुक्तं स्थानमवाप, यदा व्रजगोपिकाः कृष्णप्रेषिते दूते उद्धवे कटाक्षनिक्षेपं कुर्वन्त्यः उपालम्भवचांसि ब्रुवन्ति। यतो हि सकलमिदं वचनं भ्रमरमभिलक्ष्य कथ्यते, अतः साहित्ये भ्रमरगीतमिति कथ्यते। अत इदं अप्रस्तुतप्रशंसालङ्कारस्य सुन्दरमुदाहरणम्, येनात्र निहितो रसः पोष्यते। अधोलिखितं पद्यं काव्यसौन्दर्याधायकतत्त्वानां सुमनोरमं सम्मिश्रणं सुदर्पणभूतं वर्तते–

१. मेघदूतम् - उत्तरमेघः प. २३

**मधुप कितवबन्धो! मा स्पृशाङ्घ्रिं सपत्न्याः**
**कुचविलुलितमाला कुङ्कुमश्मश्रुभिर्नः।**
**वहतु मधुपतिस्तन्मानिनीनां प्रसादं**
**यदुसदसि विडम्ब्यं यस्य दूतस्त्वमीदृक्॥**[1]

पुनः शिखरिणीकूछन्दं करुणरसेन भक्तिरसेन च सामञ्जस्यमाप्नोत्। शिखरिणीप्रयोगे करुणासंवेदना- कोमलता-भावुकतादितत्त्वानाम् एवंविधः प्रयोगो जायते यतश्छन्दोविधानं भावरज्ज्वा सहृदयहृदयं बध्नाति। नैका देवस्तुतयो भक्तिभावान्विताः प्रार्थनाश्च शिखरिणीछन्दसा निबद्धाः सन्ति। अस्य समन्वयस्य स्वरूपं वयं शङ्कराचार्यरचिते देव्यपराधक्षमापनस्तोत्रे विलोकयामो यस्येदं प्रथमं पद्यम्–

**न मन्त्रं नो यन्त्रं तदपि च न जाने स्तुतिमहो**
**न चाह्वानं ध्यानं तदपि च न जाने स्तुतिकथाः।**
**न जाने मुद्रास्ते तदपि च न जाने विलपनं**
**परं जाने मातस्त्वदनुसरणं क्लेशहरणम्॥**[2]

आराध्यदेव्याः समक्षं क्षमायाचनमात्मसमर्पणञ्च अनेन वृत्तेन समीचीनतया क्रियेते। शङ्कराचार्येण स्वकीया भक्तिमयी रचना सौन्दर्यलहरी शिखरिणीछन्दसा प्रणीता। पण्डितराजेन जगन्नाथेन स्वकीयानि लहरीकाव्यानि, विशेषरूपेण गङ्गालहरी अनयैव छन्दसा विरचिता। अनेकानि स्तोत्रकाव्यानि शिखरिणीनिबद्धानि सन्ति। शोकपिहितस्य करुणाप्लावितस्य हृदयस्य चीत्कृतिः शिखरिण्या सविशेषं श्रूयते।

रसालङ्कारच्छन्दसां त्रयाणामपि तत्त्वानां सन्निवेशो भवभूतिरचिते उत्तररामचरिते दृश्यते, यत्र लव चन्द्रकेतुनामानौ समलक्ष्मण-पुत्रौ युवानौ भयङ्करयुद्धे संलग्नौ स्तः। पृथ्वीछन्दस्यभिव्यक्तो वीररसात्मको भावोऽनुप्रासालङ्कारसंयुक्तः सन्, विचित्रं कमपि प्रभावं वितनोति यथा–

**झणज्झणित-कङ्कण-क्वणित-किङ्किणीकं धनु–**
**र्ध्वनद्-गुरू-गुणाटनीकृत-कराल-कोलाहलम्।**
**वितत्य किरतोः शरानविरतं पुनः शूरयो-**
**र्विचित्रमभिवर्तते भुवन-भीममायोधनम्॥**[3]

---

१. श्रीमद्भागवतम् १०.४७.१२
२. देव्यपराधक्षमानपनस्तोत्रम्, प. १, २
३. उत्तररामचरितम् ६.२

रसच्छन्दसोरन्तः सम्बन्धः प्रामाणिकछन्दः प्रयोगे परिलक्ष्यते। यद्यपि लघुरूपं वर्तते वृत्तमिदं, तथापि ओजस्वितासम्पन्नं वीरत्वभावनाप्रदीपकं वर्तते। यद्यपि अष्टाक्षरात्मकमेतत्, तथापि युद्घोत्साहयुक्तानां वीराणां प्रयाणकाले प्रोत्साहकं प्रेरकञ्च विद्यते, यस्य गानसमकालमेव तेषां पादाः अग्रे प्रतिष्ठन्ति यथाऽऽधुनिकेऽस्मिन् प्रयाणगीते–

**चलन्तु वीरसैनिकाः प्रयान्तु वीरसैनिकाः।**
**सगौरवं सडिण्डिमं व्रजन्तु वीरसैनिकाः॥**
**करे सुशस्त्रमण्डनं स्वरे च सिंहगर्जनम्**
**जने जने व्रतं दृढं स्वमातृभूमिरक्षणम्**
**स्वदेशपुण्यगौरवं समरन्तु वीसौनिकाः।**
**चलन्तु वीरसैनिकाः -------------॥**[1]

प्रामाणिकाछन्दसः उत्तमो लोकप्रियः प्रयोगः रावणकृते शिवताण्डवस्तोत्रे प्राप्यते। अस्मिन् स्तोत्रे ताण्डवनृत्यं कुर्वतः शङ्करस्य भयङ्करं स्वरूपं तथैव दृग्गोचरी भवति, यथाऽस्मिन् पद्ये परुषवर्णानुप्रासानां दीर्घकायसमासानां च सङ्घटनं दृश्यते। वीररसस्य, अनुप्रासालङ्कारस्य, प्रामाणिकाछन्दसश्च सम्मेलनमिदम्–

**जटाटवी-गलज्जल-प्रवाह-पावितस्थले**
**गलेऽवलम्ब्य लम्बितां भुजङ्ग-तुङ्ग-मालिकाम्।**
**डमड्डमड्डमड्डमन् निनादवड्डमर्वयम्**
**चकार चण्ड ताण्डवं तनोतु न शिवः शिवम्॥**

**जटा-कटाह-सम्भ्रम-भ्रमनिलिम्पनिर्झरी**
**विलोलवीचि-वल्लरी विराजमान-मूर्धनि।**
**धगद्-धगद्-धगज्ज्वलल्ललाटपट्टपावके**
**किशोरचन्द्रशेखरे रतिः प्रतिक्षणं मम॥**[2]

भावेन सह भाषाय तीव्रः प्रवाहोत्र छन्दोविधानविहितो वर्तते। चण्डवृष्टिप्रपातनामके विशालवृतेऽपि अयमेव भावप्रवाहो भाषाप्रवाहश्च दरीदृश्येते। आधुनिकसंस्कृत-काव्येऽपि भावे भाषायाञ्च ये नवनवाः प्रयोगा दृश्यन्ते तत्रापि त्रयाणामेषां तत्त्वानां सुसमन्वयः संदृश्यते।

इत्थमन्ते वयं विभावयामो यत् रसः काव्यस्यात्मा अन्तस्तत्त्वञ्च, छन्दोविधानं च तच्छरीरम् बाह्यतत्त्वञ्च। अलङ्कारः आन्तरिक-बाह्योभयविधरूपेण काव्यस्य शोभाधायकं तत्त्वम्। सर्वाण्येतानि

---

१. गीतकन्दलिका, प्रयाणगीतम् - गी. ४

२. शिव-ताण्डव-स्तोत्रम् प. १, २

तत्त्वानि एकत्र सङ्गतानि भूत्वा परस्परं साहाय्यं कुर्वन्ति, अन्योन्यं पोषयन्ति। स्वकीये मौलिके स्वरूष ते परस्परं भिन्नरूपाणि भूत्वाऽपि कमपि अन्तःसम्बन्धं धरन्ति। इदं स्थापितं तथ्यं यत् संस्कृत-काव्यशास्त्रे रससिद्धान्तः सदा गुण-रीति-वृत्ति-परिप्रेक्ष्य रुव पर्यालोचितः। अयमभिप्रायो यत् रसविशेषा भावविशेषाश्च शैलीविशेषं भाषाविशेषञ्च आश्रित्य प्रवर्तन्ते। छन्दोऽपि काव्यस्याशयज्ञापनसाधनं वर्तते। तर्हि अर्थव्यञ्जनाया शब्दसाधनायाश्च मध्ये सन्तुलनस्थापनम् आवश्यकम्। सहृदयहृदयं प्रति काव्यस्यार्थसम्प्रेषणं तदैव सम्भवं, यदा सोऽर्थः अलङ्कारात्मिकया शैल्या समुचितच्छन्दोविधानेन सह अग्रेसारितः स्यात्। अलङ्काराः समीचीनच्छन्दो विधानेन मिश्रिताः भूत्वा नूनमेव रसभावानुदीपयन्ति पोषयन्ति च। अत इयम् आत्मदेहयोः, आन्तस्बाह्य तत्त्वयोः संस्कृतरचनासंसारे प्रवर्तमाना प्रक्रिया। शब्दार्थयोः, विषय-विधानयोः, भावालङ्करणयोश्च मध्ये समीचीनः समन्वय एव सचेतसां चेतस्सु भावोद्बोधनस्य प्रधानं कारणम्। अतः रसानामलङ्काराणां छन्दसाञ्च मध्ये प्रवर्तमानोऽन्तःसम्बन्ध एवं संस्कृतकाव्ये सौन्दर्यस्थापनस्य प्रमुखं तत्त्वम्।

# काव्यकारण-पर्यालोचनम्

**प्रो० रमाशङ्करमिश्रः**

अनपेक्षितकारणो न कोऽपि किमपि कार्य्यमनुष्ठातुं प्रभवति प्रवर्तते वा। अस्ति खलु काव्यमपि कार्यम्। अतस्तदुत्पत्तौ कानि कारणान्यपेक्ष्यन्त इति काव्यकारणविमर्शो विचार्य्यतेऽधुना।

मम्मट-प्राक्तनेषु काव्यकारणचिन्तनचणेषु आचार्येषु सर्वप्रथमं नाट्यशास्त्रकारस्य भरतस्य विचार-व्यूहमन्थनैर्ज्ञायते यत् काव्योत्पत्तये व्युत्पत्तेरेकाग्रतायाश्च कारणता निश्चीयते। यद्यपि आचार्य-भरतेन सुस्पष्टतया काव्यकारण-पक्षो नानुशीलितः, तथापि तदीय-नाट्यशास्त्रपरिसमीक्षणेन काव्यकारणद्वयमुपरितनं साधु समनुज्ञातुं शक्यते।

नाट्यशास्त्रे हि भरतेन नाट्यविषयमधिकृत्यैव विचारमरीचय आस्फालिताः। नाट्यञ्च दृश्यकाव्यमेव। भरतोत्तरकाले तु दृश्यकाव्यमेव काव्यात्मकतां बिभर्ति स्म; ततस्तु काव्यं द्वैविध्यमभजत दृश्य-श्रव्य-भेदाभ्याम्। काव्यत्वन्तूभयत्र निर्विशेषमेव।

भरतेन नाट्यनिर्माणक्षमा ऋषयो वेदगुह्यज्ञाः संश्रितव्रताश्च प्रतिपादिताः सन्तिः–

**य इमे वेद-गुह्यज्ञा मुनयः संश्रितव्रताः।**[१]

'वेदगुह्यज्ञ' शब्दो निगमागमावार-पारीणतां सूचयति, 'संश्रितव्रत'-शब्देन मुनीनां नाट्य-निर्मातृणां (कवीनामिति यावत्) भावलीनता, एकाग्रता, निर्मलमतित्वं वा द्योत्यते। तथा च निष्कर्षतया भरतमतमनुसृत्य काव्योत्पत्तौ कारणद्वयमभिप्रेयते–

१. निश्शेष-वाङ्मयज्ञानम् (व्युत्पत्तिः) २. निर्मलमतिः (ऐकाग्र्यम्)।

भरत-सम्मतिपथमनुसरता भामहेन कवीनां प्रतिभासम्पन्नता लोकशास्त्रज्ञता चानिवार्यतयाऽपेक्षते। इयञ्ज प्रतिभा निर्मलमतिरेव भरत-सम्मता न खलु भामहेनापि काव्यकारणप्रकरणं सुस्पष्टतया समुद्घाटि, तथापि काव्यरचनोपयोगि-तत्त्व-सन्दोहोपस्थानस्यैव परिशीलनेनोपर्युक्तं काव्यकारणद्वयमुन्मील्यते। भरतापेक्षया हि भामह उदारतरः प्रस्फुटतरश्च काव्यकारण-विमर्शने। काव्यज्ञ-शिक्षाऽपि भामहेन काव्यकारणत्वेन परिशीलिता। तथा चानुभामहं काव्यनिर्माणे कारणत्रयी दृष्टिपथमधिरोहतिराम्–

१. नाट्यशास्त्रे पृ० २

१. प्रतिभा। २. लोकशास्त्रज्ञता। ३. काव्यज्ञशिक्षा च।

कारिकान्तः प्रयुक्तैः भामहोक्त-कतिपयवचनैरेव निरुक्तं काव्यकारणत्रयं निर्णीयते[१]। इदमपरमस्ति ध्यातव्यं यद् भामहः काव्यकारणकोटौ निखिलजगद्गतं लोकशास्त्रज्ञान-वैभवमशेषं परिगणयति। सर्वोऽपि शब्दोऽर्थो न्यायनिचयः कला-कलापो वा काव्याङ्गतया कामपि विच्छित्तिं बिभर्ति।[२] काव्याङ्ग-शब्दो काव्यकारणत्व-विमर्शकः। आचार्यवामनेनाऽपि काव्यकारणार्थक एव काव्याङ्गशब्दः प्रयुक्तः काव्यालङ्कारसूत्रे।[३]

अनेन सूच्यते यद् भामह-सम्मतं द्वितीयं काव्यकारणं सुविस्तृतं समुल्लसितविविध-विवेकोल्ला-सञ्चेति।

आचार्य-दण्डिना काव्योत्पत्तौ कारणत्रयी पर्यालोचिता[४]-प्रतिभा, श्रुतं (शास्त्रं शास्त्राज्ञेतेति यावत् अभियोगश्च = अभ्यासश्च)। उक्त-तत्त्वत्रयस्य कारणताविनिश्चये कृते भामहेन निगदितं यत् प्रतिभाया अभावेऽपि विकट-शास्त्रज्ञान-दार्ढ्ये काव्याभ्यासे प्रगाढे च सति काव्यं हृदयाह्लादकं जायत एव। पुनरपि प्रतिभाया अपरिहार्यतां स्वीकुर्वता तेन सुविचार्योक्तं यत् स्यान्नाम कवित्वसंस्फुरण-वृद्धिर्व्युत्पत्त्यभ्यासाभ्यामपि; तथापि मूलरूपं कावित्वसामर्थ्यं (प्रतिभानन्तु) अपरिहार्यमेव।

दण्डिसम्मतं कारणत्रयमपि समुदितमेव सत् काव्यकारणं जायते, न तु व्यस्तं सत्। समुदित-तत्त्वत्रय-कारणतावाद-परिपोषणायैव तेन कारणमित्येकवचनं प्रयुक्तम्[५] काव्यनिर्माणजिज्ञासूनां शास्त्राध्ययनाय अभ्यासातिशयकरणाय चोन्मुखीनीचिकीर्षुर्दण्डी प्रतिभया विनापि काव्योत्पत्तिचर्चां व्यतानीत्। इत्यास्माकीनो नयः।

काव्यकारण-वर्णन-प्रसङ्गे प्रतिभानात् पूर्वं पदं दण्डि-प्रयुक्तं सूचयति यद् विलक्षण-प्रतिभया विलक्षणं सहृदय-हृदयाह्लादकं काव्यं समुत्पाद्यते, किन्तु विलक्षणप्रतिभाया अभावे, सामान्यप्रतिभायां सत्यामपि काव्यं कर्तुं शक्यत इति दण्डिहृदयाकूतम्।[६]

तथा चेदं तात्पर्य्यं पर्य्यवसीयते यत् काव्यं प्रति वर्णिततत्त्वत्रयस्य समुदितकारणतैव अवधारणीया, यथा मम्मटोऽवधारयति 'हेतुर्नतु हेतव' इत्यादिना। पण्डितराजजगन्नाथोऽपि प्रतिभामेव काव्यहेतुं मन्वानोऽपि विलक्षणौ व्युत्पत्त्यभ्यासौ संवलितौ प्रतिभाप्रेरकौ स्वीकरोति–

---

१. भामह. काव्या. पृ० ३-४
२. अहो भारो महान् कवेः (भा. का. पृ० १०८.४ तत्रैव।)
३. वामन-का. सू. पृ. ३८
४. का. द. पृ० ५४-५५
५. तत्रैव पृ० ५४-५५
६. कारणं काव्यसम्पदः (का. पृ० ५५)

**क्लृप्त-व्युत्पत्त्यभ्यासयोरेव प्रतिभाहेतुत्वकल्पने लाघवात्।**

(रसगङ्गाधरे प्रथमानने, पृ० २६)

आचार्य-वामनः काव्यालङ्कार-सूत्रे लोकं विद्यां प्रकीर्णं च काव्यसम्पदः कारणमेकं समुदितं मनुते। लोक-पदेन स्थावरजङ्गमात्मकोभय-लोकविषयकज्ञानसम्पन्नता सूच्यते। विद्यापदेन च व्याकरण-कोशच्छन्दश्शास्त्र-कला-कामशास्त्र-दण्डनीत्यादिशास्त्रज्ञताऽभीप्सिता। प्रकीर्णपदञ्च लक्ष्यज्ञतां (काव्यज्ञानं), वृद्धसेवाम् (काव्यज्ञोपासनम्), अभियोगम् (अभ्यासम्) अवेक्षणं = शब्दार्थ-संयोजन-वियोजन-सामर्थ्यं, प्रतिभानम्=कवित्वबीजरूपं संस्कारविशेषम्, अवधानं (चित्तैकाग्र्यं) प्रबोधयति[१]।

वामनः प्रतिभानं = कवित्व-बीजरूपं संस्कार-विशेषं विना काव्यमनिष्पाद्यमिति निरूपयति, प्रतिभानं विना सायासं कृतं काव्यमुपहसनीयमिति मन्यते। तेन प्रतिभानमेव काव्योत्पत्तौ सर्वोत्कृष्टं कारणं स्वीक्रियते वामनेन। तस्माच्च वामनाभिमतं कारणत्रयं सम्मतं—लोको विद्या प्रकीर्णञ्चेति।

[२]आचार्य-रुद्रटोऽपि काव्यकारणत्रितयमूरीकरोति शक्तिम्, व्युत्पत्तिम्, अभ्यासञ्चेति। रुद्रटरचित-काव्यालङ्कार-व्याख्याकृता नमिसाधुना काव्योत्पत्तौ 'शक्तेः' परमावश्यकता स्वीकृता। असारतत्त्वानाम् = असामर्थ्यादिदोषाणां निरसनायैव व्युत्पत्तेरावश्यकता, काव्यक्रियायां क्षिप्रताऽऽपादनाय वृद्ध्ये वा अभ्यासस्य दार्ढ्यमपेक्षितम्। अत एव काव्यचारुत्वचित्रणाय शक्त्या सहैव व्युत्पत्त्यभ्यासौ समपेक्षितौ स्तः। व्युत्पत्त्यभ्यासौ विनाऽपि शक्त्यैव काव्यनिर्मितिस्सम्भवति।[३]

शक्त्या खलु पद-पदार्थौ परिस्फुरतः। नमिसाधू रुद्रटश्च निगदतो यच्छक्त्या शब्दार्थौ प्रसङ्गानुसारिणौ मनसि सन्निधत्तः। सुन्दरस्य निर्दोषस्य काव्यस्य समुत्पत्तये व्युत्पत्तिरावश्यकी।[४] तादिदं कमनीय-काव्य-कवन-कौशलमभ्यासेनैव दार्ढ्यमुपैति। अभ्यास-संस्फुरित-कौशलेनैव गुम्फितानि काव्यानि आकर्षणभाजनानि जायन्ते। तथा च रुद्रटश्चारुकाव्यकरणाय शक्तिव्युत्पत्त्यभ्यासरूपं कारणत्रयं स्वीकरोति।

[५]रुद्रटः शक्तिप्रतिभयोरैक्यं मन्यते। सेयं प्रतिभा सहजा, उत्पाद्या चेति। अनयोस्सहजा प्रशस्यतरा। आनन्दवर्धनस्तु शक्तिं व्युत्पत्तिञ्चेति काव्यकारणद्वयं स्वीकरोति[६]। रुद्रटोक्तशक्तिभेदद्वयानुसारेणैव शक्त्याऽभ्यासोऽपि सङ्गृह्यते। आचार्यराजशेखरः[७] काव्यकरणेषु शास्त्रज्ञानस्य प्रामुख्यं मन्वानः स्वास्थ्यं,

---

१. का. सू. पृ० ५१
२. रुद्रट. का. पृ० ९
३. नमिसाधुः (का. पृ० १०)
४. रुद्रट का. पृ० ११
५. प्रतिभेत्यपरैरुदिता, ५ का. पृ० ११
६. ध्व. पृ० ३१६
७. काव्यमीमांसायाम् पृ० ४९

प्रतिभामभ्यासं भक्तिं, विद्वत्कथां, बहुश्रुततां, स्मृतिदार्ढ्यम्, अनिर्वेदं (प्रसन्नतां) च काव्यकारणकोटिषु आटीकयति।[१]

एकत्र तु तेन शक्तिरेव काव्यहतुरिति निरुच्य शक्तेरेव प्राधान्यमङ्गीकृतम्। सामर्थ्य-विशेष एव शक्त्या गृह्यते। शक्त्यैव प्रतिभा-व्युत्पत्ती समुद्भवतः।

तथा च राजशेखरमते शक्ति-व्युत्पत्ती काव्यकारणद्वयरूपेण सम्मते। शास्त्रज्ञानमेव व्युत्पत्तिर्गण्यते। अभिनवगुप्तः शक्तिं व्युत्पत्तिं गुरूपदेशञ्च काव्यहेतुत्वेन व्याख्याति।[२]

अत्र मते शक्त्यैव प्रतिभा समुपादीयते। आचार्यमहिमभट्टः प्रतिभाया एव काव्यं प्रति कारणतां स्वीकरोति। महिमभट्टोऽभिप्रैति यद् रसानुकूलशब्दार्थचिन्तनैकतानं कविं परिस्फोरयन्ती विजृम्भयन्ती वा शक्तिः प्रज्ञैव। सैव प्रज्ञा च प्रतिभेति निगद्यते[३]।

[४]शक्ति-व्युत्पत्त्यभ्यासाः काव्यहेतुरिति मम्मटाचार्य्याः प्राहुः। व्युत्पत्तिः एव निपुणता मन्तव्या एते च त्रयः समुदिता एव हेतुर्न तु हेतवः। शक्तिः कवित्वबीजरूपः संस्कारविशेषो नाम[५] यां विना काव्यं न परिस्फरेत् परिस्फुरितं वा सत् सद्भिरुपहसनीयं स्यात्। मम्मटस्तु 'हेतुर्न तु हेतव' इति वृत्तिवचसा शक्तिनिपुणताभ्यासानां संयुक्तस्यैव स्वरूपस्य काव्यकारणतेति मनुते[६]।

सत्यपि विशेष्य-विशेषणपदयोस्समानवचनकत्वनियमे स्थिरे[७] मम्मटेल त्रयाणां कृते हेतुरित्येकवचन-प्रयोगः कृतः काव्योत्पत्तौ प्रयोजकस्य शक्त्यादितत्त्वत्रय-समुदायस्य कारणतां सूचयति।[८]

## काव्यकारणं प्राक्तनाचार्य्याश्च

सम्प्रति मम्मट-पूर्ववर्तिभिराचार्यैरङ्गीकृतानां काव्यकारणानां तुलनात्मकं समीक्षणमत्र वितन्यते, येन तत्तत्कारणानां हेयतोपादेयता वा ज्ञातुं शक्येत। सर्वप्रथमं भरतभामहौ विचिन्त्येते। आचार्य-भरतो नाट्यशास्त्रे संश्रितव्रतवेदगुह्यज्ञ-शब्दाभ्यां यानि कारणानि प्रतिपादयिषति, तेषा यथायोगं सङ्ग्रहं भामहः प्रतिभा-लोकशास्त्रकाव्यादि व्युत्पत्तिभ्यां चिकीर्षति। भामह-सूचितं तृतीयं कारण गुरूपदेशरूपं भामहोपज्ञमेव संवेद्यमिति।

---

१. का. मी. पृ० ४९
२. सा शक्तिः केवलं काव्ये हेतुः (का. मी. पृ. ११)
३. का. मी. पृ० ११
४. का. पृ. ४
५. का. पृ. ४
६. का. प्र. पृ. ५
७. व्युत्पत्ति. पृ. ४
८. का. प्र. सुधासागरे पृ. ९८

अयमेव गुरूपदेशो मम्मटोक्तः काव्यज्ञशिक्षाऽभ्यास इति न विस्मर्तव्यम्। दण्डिनाऽपि शब्दान्तरेणैव भामहोऽनुसृतः। भामह-दण्डिभ्यान्तु समानतया काव्यकारणतया प्रतिभा स्वीकृतैव। भामहोक्तं द्वितीयं कारणं लोकशास्त्रकाव्यादिज्ञानरूपं दण्डिना 'श्रुत'-रूपेऽन्तर्गणितम्। भामह-सङ्केतितं तृतीयं कारणं गुरूपदेशरूपं दण्डिना अभियोगतयाऽभ्यासतया वाऽङ्गीकृतम्। तथा च द्वयोरपि हार्दोऽभिप्रायस्तुल्यकोटि-माटीकते।

आचार्यवामनोऽपि वाक्प्रपञ्चरूपेण कारणबाहुल्यं वितन्वानोऽपि दण्डिदर्शितं कारणत्रयमेव सारतया मनुते। दण्डिप्रयुक्तं शब्दद्वयं वामनेन नाम्नैव परिवर्तितं, दण्डि-प्रतिभा वामनेन प्रतिभानरूपेण प्रयुक्ता, श्रुतञ्च लोकशास्त्रकाव्यादिज्ञानतया परिणमितम्, अभियोगश्च लक्ष्यज्ञत्ववृद्धसेवादि-शब्दान्तरैर्निरूपित एव। सारांशतो लोको विद्या प्रकीर्णञ्चेति वामनाभिमतं हेतुत्रयम्।

आचार्यरुद्रटोऽपि पूर्व-परम्परापथमनुसरन् शब्दान्तरणैरेव कारणत्रयं (शक्तिव्युत्पत्त्यभ्यासरूपं) स्वीकरोति। वामनस्य प्रतिभान–लोकशास्त्रकाव्यादिज्ञानलक्ष्यज्ञत्ववृद्धसेवा-शब्दाः रुद्रटेन शक्ति-व्युत्पत्त्यभ्यासरूपेषु परिणमिताः। वामनसम्मता विकीर्णा अभिप्राया रुद्रटेन संक्षिप्तशब्दैरुपसंहृता इति रुद्रटचिन्तनौदार्य्यं वेदितव्यम्।

आनन्दवर्धनो ध्वन्यालोके प्रसङ्गतः शक्ति-व्युत्पत्ती व्याख्याति।[१] सफलः कविर्व्युत्पत्तिकृतान् दोषान् शक्त्या संवृणोति, किन्तु शक्तिजनितान् दोषान् न कोऽपि व्युत्पत्त्याऽऽच्छादयितुमर्हतीति व्युत्पत्त्यपेक्षया शक्तेर्गरीयस्त्वं ध्वनिकारोऽभिप्रैति। तथा च ध्वनिकारसम्मतं कारणद्वयं वेदितव्यम्–शक्तिर्व्युत्पत्तिश्चेति। रुद्रटसम्मतां शक्तिभेदद्वयीं सहजामुत्पाद्याञ्च ध्वनिकार आनन्दवर्धनश्शक्त्यन्तर्भूतामेव मनुते। एवञ्च आनन्दवर्धनान्ता आचार्यपरम्परा कारणत्रयैकमत्य-समर्थिका भाति।

राजशेखरोऽपि आनन्दवर्धनान्तगां परम्परां सममानयत्। किञ्चिच्छब्दान्तरैः सह आनन्दवर्धनमतमेव से आद्रियत। आनन्दवर्धस्य शक्तिः (सहजा) प्रतिभारूपेण व्युत्पत्तिश्च श्रुतरूपेण, उत्पाद्या शक्तिश्च (अभ्यासश्च) आयासरूपेण (अभ्यासरूपेण) राजशेखरेण प्रतिपादिताः।

आनन्दवर्धनकृते ध्वन्यालोके भरत-प्रणीते नाट्यशास्त्रे च क्रमशो लोचनव्याख्याया अभिनवभारत्याश्च कर्ता आचार्योऽभिनवगुप्तपादाचार्य्यो व्याख्येय-ग्रन्थद्वयसिद्धान्तसर्वस्वं स्थैर्यमापादयन् शक्ति-व्युत्पत्त्यभ्यास-रूपं कारणत्रयं निरूपयन् भरताद्यां राजशेखरान्ताञ्च शास्त्र-परम्परावीथीमनुपालयन्निव विलोक्यते। राजशेखरोक्ताः प्रतिभा-श्रुताभ्यास-शब्द एव अभिनवगुप्ताचार्य्येण शक्ति-व्युत्पत्ति-गुरूपदेश-शब्दैः प्रतिबोधिताः। अयमेव गुरूपदेशोऽभ्यास इति ज्ञेयम्।

---

१. अव्युत्पत्तिकृतो दोषः शक्त्या संव्रियते कवेः।
यस्त्वशक्तिकृतो दोषः स झटित्यवभासते। (ध्व. पृ. ३१६)

वस्तुतस्तु परिवर्तितान् शब्दानेव विहाय काव्य-कारणता-प्रतिपत्तौ न किमपि तात्पर्यदृशा मतभेदान्तरं मन्तव्यमिति। महिमभट्टः प्रज्ञामेव काव्यकारणमौलिभूतां विभावयति। महिमभट्टीयं काव्यकारण-विवेचनमपर्याप्तमिव लक्ष्यते। प्रज्ञैव च शक्तिः प्रतिभा वेति व्याख्यायते।

[१]मम्मटः पूर्वागतां परम्परां परिपोषयन् समर्थशब्दैः तां स्थिरी चकार। अभिनवगुप्तकालं यावत् प्रवहन्तीं काव्यकारणतरङ्गिणीं समाश्रयन्नेव पूर्वाङ्गीकृतान् कारणकलापान् मम्मटो व्युत्पद्यते—अभिनवगुप्तस्य शक्तिः (प्रतिभा) मम्मटीया शक्तिः अभिनवगुप्तस्य व्युत्पत्तिः मम्मटीया निपुणता (लोकशास्त्रकाव्या-द्यवेक्षणजन्या) अभिनवगुप्तस्य गुरूपदेशो मम्मटीयोऽभ्यास इति मम्मटमतं समञ्जसम्।

## संयुक्त-कारणता

मम्मटेन पूर्व-परम्परापथ-प्राप्ते काव्यकारणकलापोपस्थापन-प्रसङ्गे विशृङ्खलतया निरूपितं कारणवर्णनं सुनियोजितक्रममनुसृत्य व्यवस्थितं कृतं शक्त्यादित्रयञ्च संयुक्तकारणमेकं दार्ढ्येन प्रतिपादितम्।

आचार्य्य-दण्डी तु संयुक्तकारणतां चिन्तयन्नपि अद्भुत-प्रतिभानं विनैव शास्त्रज्ञानस्य अभियोगस्य च बलेनैव काव्योद्भवकल्पनां स्वीचकार। आनन्दवर्धनोऽपि शक्त्याऽव्युत्पत्तिकृतान् दोषान् समाच्छादयितुमीहते। इत्थम् आनन्दवर्धनदण्डिनौ तत्त्वत्रयसंयुक्त-कारणतावादं नोररीकुरुत इति प्रतीयते।[२]

मेधानैपुणी-बलेन आचार्यमम्मट आनन्दवर्धनीयं शक्ति-समर्थनपक्षं परिपुष्णन् संयुक्तकारणतावादञ्च समर्थयमानः प्रतिभां (शक्तिं वा) समुपातिष्ठिपत्। मम्मटेन काव्य-श्रेणीद्वयी परिकल्पिता—(क) शक्तिबलैः कविभिः प्रणीयमानानि अनुपहसनीयानि काव्यानि। (ख) शक्ति-निरपेक्ष-कविभिः क्रियमाणानि उपहसनीयानि काव्यानि। प्रथमकोटिकानि अनुपहसनीयानि काव्यानि खलु न शक्त्यालम्बनन्मन्तरेण प्रणेतुं शक्यन्नते।

दण्डिना यादृशानि काव्यानि श्रुतेन अभ्यासबलेन च सम्पाद्यानि कल्पितानि, तानि हठाकृष्टैः कतिपयपदैर्मण्डितानि सन्त्यपि न विद्वज्जनश्लाघ्यतां प्रपद्यन्ते खलु। अतस्तानि यदि शक्ति-समाश्रयणं विनापि सम्पद्येरन् तथापि तेषां श्लाघ्यत्वाभावात् संयुक्तकारणतावादो न दूषणं भजतेतराम् 'शक्तौ सत्यां वर्तमाना अपि कतिपये दोषसन्दोहा न दोषवत् प्रतीयन्ते, शक्तिबलेन प्रच्छन्नत्वात्' इत्यानन्दवर्धनाचार्यमतमपि विशदायते। अतश्च गाम्भीर्य्येण विचारततौ विततायामपि दोषांशवर्जितं दोषज्ञसूरिवृन्दवन्दितं सत् काव्यन्तु वस्तुतो व्युत्पत्त्यभ्यास-संवलितया प्रतिभयैव (शक्त्यैव) प्रणेतुं पार्यते, नान्यथा। लोकशास्त्र-काव्या-द्यवेक्षणजन्यांनैपुणीं (व्युत्पत्तिं) काव्यज्ञजनशिक्षाबलोपलब्धाभ्यासञ्च विना प्रसृतं (शक्तिमात्रोपकल्पितं) काव्यमपि नाना-व्यवहारवैधुर्यात् प्रचुरदोषोपहतम् उपहसनीयञ्च जायते।

---

१. का. प्र. सुधासागरे पृ. १९
२. काव्यसमीक्षा पृ० ५

मम्मट-प्रतिपादितस्त्रितय-कारणतावादो द्रढीयान्, नाद्यावधि केनाप विपश्चिदपश्चिमेन निराकरणीयतां प्राप्तः। तर्ककुतर्क-वितर्क-पटीयसा रसगङ्गाधरकारेण आचार्यजगन्नाथेन दुर्बलैस्तर्कजालैः संयुक्त-कारणत्रितयतावादो निराचिकीर्षितः। प्रतिभैव काव्यकारणमिति सिसाधायिषता तेन प्रतिभाकारणद्वयं कल्पितम् (क) अदृष्टजन्या प्रतिभा, (ख) व्युत्पत्त्यभ्यासजन्या प्रतिभेति च। यदि च प्रतिभाव्युत्पत्त्यभ्यासेति कारणत्रितयमेव काव्योद्भवकारणं स्वीक्रियेत तदा पञ्चवर्षदेशीयेन व्युत्पत्त्यभ्यास-हीनेन बालकेन देवतामहापुरुषादिकृपाबलेन कृते प्रशस्तकाव्ये; व्युत्पत्त्यभ्यासहीनैर्जनैः कृतेऽपि प्रयास-प्राचुर्य्ये काव्यनिर्माणासमर्थैः, पश्चाच्च व्युत्पत्त्यभ्यासयोः कृतयोस्सतोः काव्यनिर्माणसामर्थ्ये जाते व्यभिचारदोषा आपद्येरन्। अतश्च तत्त्वत्रयसंयुक्तकारणतावादो न युक्त इति प्रतिभारूपैककारणतावाद एव ज्यानिति पण्डितराजाः प्राहुः।

किन्तु तर्काभासा इव आभासन्ते पण्डितराज-प्रदत्तास्तर्कसन्दोहाः। यदि पञ्चवर्षदेशीयो बालको देवता-महापुरुषाद्यनुकम्पाबलेन प्रतिभां लब्धुं शक्नोति, तदा तु व्युत्पत्त्यभ्यासावपि महतामनुकम्पया प्राप्तुं शक्येत इत्यत्र का वाचोयुक्तिः। अतश्च नात्र व्यतिरेक-व्यभिचारापातदोषः समुत्थापनीयः। एवमेव प्रतिभावता जनेन कतिचित्कालं यावत् सप्रयासेनापि काव्यं निर्मातुमशक्तेन सता कृतयोर्व्युत्पत्त्यभ्यासयोः काव्यनिर्माणशक्तिः प्राप्यत इति व्युत्पत्त्यभ्यासयोः स्वतन्त्रकारणताऽपि न वाच्या, अदृष्टजन्यप्रतिभया सहजायाः शक्तेरेव जन्यत्वात्, उत्पाद्यायाः शक्तेस्तु व्युत्पत्त्यभ्यासाभ्यामेव जन्यत्वाच्च।[१]

अतः सुस्पष्ट-प्रतिपत्त्यै एककारणतावादे (पण्डितराजीये) तत्त्वत्रितयकारणतावादे (मम्मटीये) चोभयत्र कारणत्रय-संयोगोपस्थितिरेव सर्वथा ज्यायसीति मन्तव्यम्। केवलं प्रौढिमात्रेणैव जगन्नाथः प्रतिभैककारणतावादं प्रातिष्ठिपत्।

काव्यप्रकाशस्य सुधासागराख्याया व्याख्यायाः कर्ता आचार्य-भीमसेनोऽपि त्रितयकारणतावादमेव समर्थयमानः शक्तिमात्रनिष्पाद्यं व्युत्पत्त्यभ्यासद्वयमात्र-निष्पाद्यञ्च काव्यं सामान्यमेव वक्ति। प्रतिभा-व्युत्पत्त्यभ्यास-संयुक्तकारणेन प्रणीयमानं काव्यन्तु अनुपहसनीयं रसोद्बोधनक्षमञ्च भवतीति। बाल्यावस्थायां प्रतिभामात्रजन्यं काव्यं पामरजनश्लाघ्यमेव भवति, शास्त्रलोक-काव्याद्यवेक्षणजन्य-व्युत्पत्तौ लब्धायां कृतं काव्यं प्रशस्तं जायते, किन्तु अग्रे काव्यज्ञशिक्षया काव्यरचानाभ्यासे भृशं विधीयमाने तु कृतं काव्यं सहृदय-गोष्ठीषु सुप्रशस्तं रसनिष्पत्तिक्षमञ्च जायत इति लोके दृश्यत एव।

यथा च घटं प्रति दण्डचक्रतन्तूनां संयुक्तकारणता सर्वसम्मता, तथैव च काव्यम्प्रति शक्ति-व्युत्पत्त्यभ्यासानां संयुक्तकारणतैव शोभते, न तु अग्निप्रज्वलनं प्रति तृणारणिमणीनामिव पृथक् पृथक् प्रत्येकं कारणता सद्भ्यो रोचते। जयदेवोऽपि चन्द्रालोके संयुक्तकारणतामेव समर्थयते–

१. रसगङ्गाधरे प्र. पृ. ८

**प्रतिभैव श्रुताभ्यास-सहिता कवितां प्रति।**
**हेतुर्मृदम्बु-सम्बद्धा बीजमाला लतामिव।।**

(चन्द्रालोके १.६)

अत एव मम्मटोक्तिरियं सर्वथा विद्वज्जनहृद्य निरवद्या च विजयतेतराम्–

**इति त्रय समुदिताः, न तु व्यस्तास्तस्य काव्यस्योद्भवे निर्माणे समुल्लासे च हेतुर्न तु हेतवः।**

(काव्यप्रकाशे १.३ वृत्तौ)

# महाकविकालिदासकाव्येषु नारीपात्राणां सामाजिकसामर्थ्यम्

**डॉ० भागीरथिनन्दः**

प्रतियुगं साहित्यं तत्तन्मुख्यविषयवस्तुवर्णनया सह समाजचित्रमपि प्रस्तौति। मुख्यविषयोपन्यासमाध्यमेन सुयोग्यसाहित्यकारस्तद्युगवर्तिनस्तत्परवर्तिनोऽपि जनान् किमपि किमप्युपदिशति। समाजादादाय समाजायैव प्रददात्यनेकं स एष साहित्यकारः। साहित्यं न केवलं तथाकथितनारीपुरुषाणां रसात्मकवर्णनेन मनोविनोदं सम्पादयति, अपि तु समेषां शास्त्राणामाकलनपूर्वकं सामाजिकानां कृते सुमार्गसञ्चलनाय सर्वाङ्गीकार्यं सिद्धान्तमुदाहरति। साहित्यं कयाचिदपि भाषया निबद्धमस्तु नाम, तत्तदीयग्राह्यताधारेण विश्वजनीनतां भजते।

समाजे कालानुरोधेन कतिचित् परिवर्तनानि, विकृतयो, वैषम्याणि चावश्यम्भावितयाऽऽपतन्ति। हेतोरस्मात्, समाजं सुस्थिरीकर्तुं व्यवस्थाया आवश्यकता भृशमनुमीयते। एवप्रकारकपरिवेशवति समाजे परस्परं सन्तुलनाय पारम्परिकपुरातनसाहित्यसमवाये वर्णितानां चित्राणां स्वीकारोऽवश्यम्भावी सुतरां प्रतीयते।

समाजसंरचनायाः स्तम्भभूतयोर्नारीपुरुषयोः सम्बन्धः - कर्तव्य - सामरस्यादिबिन्दुषु विसङ्गतयः काश्चनानुमीयन्तेऽवश्यम्। किञ्च, शीतलो विवादोऽपि। तत्तत्परिवेशे विसङ्गतेः कारणं किमपि भवितुमर्हति। परन्तु मुक्तिस्ततो समेषां काम्यैव। अतः परिवेशेऽस्मिन् पारम्परिकं साहित्यमनुसरणीयं सामाजिकैः, येनातीतेन सह वर्तमानस्य सम्बन्धः सम्भवेत्। नहि कश्चिदपुरावित् सुयोग्यो वार्तमानिकः सम्पद्यते, अतीतगर्भाद् वर्तमानस्योत्पत्तिरिति कारणात्। अतः विश्वकविसमवायश्रेष्ठस्य कालिदासस्य साहित्ये प्रतिपादितानां नारीपुरुषम्बन्ध-नारीमहनीयतोत्तरदायित्वकर्तव्यप्रवणतादीनां बिन्दूनां सूक्ष्मदृष्ट्या सामाजिकानां पुरस्तादुपस्थापनं सुतरां प्रासङ्गिकमेव।

कलिदाससाहित्ये नार्या महनीया छविः सादरं सोत्कर्षं च प्रतिपादिता वर्तते। कालिदाससाहित्येऽनेकत्र प्रणयसम्बन्धस्योन्मुक्तत्वात् कालिदासः शृङ्गारी कविरिति आशङ्क्य तत्र तत्र दोषमुद्घाटयन्ति कतिपये। तत्त्वदृष्ट्या तु शृङ्गारित्वं भूषणं कवेः। इह तु शृङ्गारीति पदेन वर्णनीयशृङ्गारस्यातिस्फुटवर्णनीयत्वमभिप्रायस्तेषाम्। वस्तुतस्तु प्रणयसम्बन्धो यदि प्रणयि-प्रणयिन्योर्मध्ये सीमितः सन् कवेः स्वानुभवे-

नोन्मुक्तीभूयास्वाद्यते साधारण्येन सामाजिकैस्तर्हि न स दोषः, अपितु गुण एव कथ्यते यतो हि वास्तविकजीवने नार्याः केवले स्वप्रणयिनि प्रणयिनीत्वसम्बन्धः, न्यान्यस्मिन् कदापि। समाजे नार्या नैका भूमिका भवन्ति कन्या - भगिनी - जाया - जननीरूपाः। प्रत्येकं भूमिकायाः सफलो निर्वाहः, पुरुषकर्तृकतत्समुचितोपयोगादयश्च नारीं महनीयां सम्पादयन्ति।

जननीति भूमिकाऽन्यतमा नार्याः। सैषा नारी पतिकुलरक्षार्थं योग्यसन्तत्युत्पादनाय प्रयासरतेन पत्या सह तत्परा तिष्ठति। तथाहि रघुवंशे सन्ततिप्राप्तिकारणात् वशिष्ठादेशेन पत्या दिलीपेन सह पत्नी सुदक्षिणा सुरभिसेवासुरक्षार्थं समर्पिता वर्तते, अन्ततश्च प्रतापवन्तं सूनुं रघुं गर्भे धारयति। तदिदं स्पष्टयन् रघुवंशे द्वितीयसर्गे ब्रूते कालिदासः–

**नरपतिकुलभूत्यै गर्भमाधत्त राज्ञी।**[१]

अत्र राज्या गर्भधारणकारणेष्वन्यतमं 'नरपतिकुलभूत्यै' इति यदुक्तं तद् वस्तुतः नार्याः सामाजिकी शक्तिरेव। तत्रैव रघुवंशे अष्टमसर्गेऽजविलापे इन्दुमत्या आकस्मिकवियोगेन कालिदासोऽजमुखेन जीवने नार्या अनिवार्यामुपस्थितिमुल्लिखति–

**गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधौ।**[२]

अर्थात् नारी गृहिणी, सञ्चालिका, सहायिका, शिष्याऽपि पतिसंसारस्य भवति। अथ च गृहिणीत्वमतिरिच्यैता भूमिका अपि तस्याः सामाजिकपरिवेशाय काम्या इति स्मारयता कालिदासेन शाकुन्तले चतुर्थेऽङ्के शकुन्तलां प्रति कण्वोपदेशच्छलेन सुनिपुणमुद्धृताः सन्ति। तथाहि–

**शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने।**
**भर्तुर्विप्रकृतापि रोषणतया मा स्त प्रतीपं गमः।।**

**भूयिष्ठं भवं दक्षिणा परिजने भाग्येष्वनुत्सेकिनी।**
**यान्त्येव गृहिणीपदं युवतयो वामाः कुलस्याधयः।।**[३]

कालिदाससाहित्ये नारी न केवलं गृहिणीसञ्चालिकासहायिकादिभूमिकासु सीमिता, अपि तु सा मुख्यप्रजापालकप्रशासकपदमधिस्थीयते। प्राचीनसाहित्यस्यैवमाधुनिकचिन्तनसम्भारः सुतरां प्रणिध ानयोग्यः। एवमदिभिः कालिदासः क्वचित्तदितरप्राचीनसाहित्यकारान् अथचाधुनिकसाहित्यिकसमवायमप्यति- शयितो दृश्यते। रघुवंशेऽन्तिमनरपतेरग्निवर्णस्य व्यसनकारणादकालनिधनेन तस्यैव राज्ञी सिंहासनाभिषिक्ता प्रजाः पालयति। अत्र कविनानेन नार्या प्रशासकता नंनिवेशिता। तदिदं तदीयशब्दैः–

१. रघु. २.७५
२. रघु. ८.६७
३. अ. शा. ४.१७

**तं भावार्थं प्रसवसमयाकाङ्क्षिणीनां प्रजाना-**
**मन्तर्गूढं क्षितिरिव नभोबीजमुष्टिं दधाना।**
**मौलेः सार्धं स्थविरसचिवैर्हेमसिंहासनस्था**
**राज्ञी राज्यं विधिवदशिषद्भर्तुरव्याहतज्ञा।।**[१]

इत्यनेन कालिदासो नार्यां विकसितराजत्वं पोषयति।

परिवारे वैचारिकसन्तुलनाय नारीपरामर्शोऽनिवार्योऽभिमतः समाजशास्त्रिभिः। इदमेव प्रशस्यं दाम्पत्यमित्यामनन्ति विद्वांसः। कुमारसम्भवे कालिदास इदं सुस्पष्टं प्रस्तौति। देवर्षिः नारदः शिवस्य विवाहप्रस्तावेन सह पार्वत्याः पितरं हिमालयं प्राप्नोति, पार्वतीशङ्करपरिणयायापि हिमालयस्य सम्मतिं कामयते। प्रस्तावेऽस्मिन् हिमालयः सम्मतोऽपि सम्मतिकामनया स्वपत्नीं मेना पश्यति। हिमालयस्य स्वयं सम्मत्यर्थं समर्थतायामपि तस्य पत्नीमुखं विलोक्य तस्याः सम्मतिकामनाऽवश्यं समाजस्य द्वैतव्यवस्थां सङ्केतयति। कालिदासदृष्ट्या पत्युः कृते पत्न्या विचारोऽपेक्षितो भवति, अथच परिवारस्य प्रमुखनिर्णयेषु दम्पत्योर्विचारसाम्यमप्यपेक्षितं भवति यतो हि पत्नी सहधर्मिणी, सहकर्मिण्यपि।

**तदेवं यथा–**

**शैलः सम्पूर्णकामोऽपि मेनामुखमुदैक्षत।**
**प्रायेण गृहिणीनेत्राः कन्यार्थेषु कुटुम्बिनः।।**

**मेने मेनापि तत्सर्वं पत्युः कार्यमभीप्सितम्।**
**भवन्त्यव्यभिचारिण्यो भर्तुरिष्टे पतिव्रताः।।**[२]

इह कविः मेनायाः पत्यभीप्सिते कार्ये अव्यभिचारितां प्रदर्शयन् दाम्पत्ये नायो वामात्वं कथमपि नैवेच्छति। नार्यां मातृहृदयस्यानाविलोदारच्छविमपि प्रदर्शयितुमिह नैव विस्मरति कविः। तदेवं यत्–मेना शिवस्य विषये, शिवस्य वरत्वप्रस्तावस्य पृष्ठभूमौ समेषां देवानां सम्मतिकारणात् तदलभ्यताविषये च सर्वं वेत्ति। तथापि तस्या मातृहृदयं कन्याया भाविसौख्य-विरहादिसम्भावनया शङ्कितं सञ्जायते। तदेतत् कालिदासशब्दैर्यथा–

**तन्यातरं चाक्षुमुखीं दुहितृस्नेहविक्लवाम्।**
**वरस्यानन्यपूर्वस्य विशोकामकारोद्गुणैः।।**[३]

---

१. रघु. १९.५७
२. कु. सं. ६.८५, ८६
३. कु. सं. ६.१२

किं बहुना, दाम्पत्ये कालिदासः 'तां जानीथाः परिमितकथां जीवितं मे द्वितीयम्'[१] इति पत्नी पत्युः द्वितीयं हृदयमित्यभिदधाति। समाजे नारीपुरुषसामरस्यायेदमस्त्येकं बलिष्ठमुदाहरणम्।

विक्रमोर्वशीयाभिज्ञानशाकुन्तलयोर्नाटकयोरारम्भे नारीमानरक्षया वर्णनं नारीणां तदानीन्तनं सामाजिकं वैशिष्ट्यं द्योतयति। पुरुरवसा निशाचरात् उर्वश्याः सुरक्षणं विक्रमोर्वशीयनाटकस्य विषयप्रवर्तनबीजमेव।

कालिदासकृतिषु शाकुन्तले नार्याः सामाजिकचित्राणामनेकान्युदाहरणान्युपलभ्यन्ते। अत्र मातुरुत्तरदायित्वम्, सखीसङ्गिनीनां समुचितं साहचर्यम्, नारीं प्रति पुरुषस्य दृष्टिः, नारीस्वरूपमित्यादिनां सुस्पष्टं वर्णनं प्रतिफलितं दृश्यते। शाकुन्तले प्रथमाङ्केऽनसूयामुखाद् दुष्यन्तो मेनकाविश्वामित्रयोः प्रयणप्रसङ्गमाकर्णयति। यदाऽनसूयामुखात् 'ततो वसन्तोदारसमये तस्या उन्मादयितृरूपं प्रेक्ष्य ............ (इत्यर्धोक्ते लज्जां नाय्यति) इति लज्जात्मकः प्रसङ्ग आयाति, तदा दुष्यन्तो वदति– 'परस्ताज्ज्ञात एव।' कालिदासोऽत्र नारीमवाञ्छितलज्जातः पृथक्कृत्य तस्याः विशिष्टं सम्मानमुट्टङ्कयति। नार्याः पुरतः पुरुषस्य प्रणयप्रकाशनं गुप्ततया वक्रतया वा समुल्लिखन् कविरसौ दुष्यन्तस्य शकुन्तलापरिणयसम्बन्धिनीमिच्छां रहस्यपि नागरिकवृत्त्योत्थापयति दुष्यन्तमुखेन यत्–

**वैखानसं किमनया व्रतमाप्रदानाद् व्यापाररोधि मदनस्य निषेवितव्यम्।**
**अत्यन्तमेव सदृशेक्षणवल्लभाभिराहो निवत्स्यति समं हरिणाङ्गनाभिः।।**[२]

अत्र नारीसत्ताया अक्षुण्णतायै प्रयासो विहितो दृश्यते। अस्य प्रश्नस्योत्तरप्रकाशनाय शकुन्तलोगतत्रपामुपस्थाप्य साहित्यिकतायाश्चतुरामेकां सरणिमवलम्बते कविः। शकुन्तलाऽस्य प्रश्नस्य व्यङ्ग्यमवगच्छन्ती राज्ञा सहालापरतां प्रियंवदा रोषेणेव तर्जयति 'इमामसम्बद्धालापिनीं प्रियंवदामार्यायै गौतम्यै निवेदयिष्यामी'ति (तत्रैव)। इत्यस्मात् प्रतीयते यत् आश्रमेऽपि नार्याः स्थितिः स्वतन्त्राऽऽसीत्। तत्रापि पारिवारिकसम्बन्धेनाश्रमवासिनो जनाः परस्परं वसन्ति स्म। अभिभावकरूपेण वृद्धनार्यामपि पारस्परिकसौमनस्यापादनसामर्थ्यं सन्निहितमासीत्। शिष्याः कन्यका इत्यभिधीयन्ते स्म। आश्रमे शिष्याः (बालकाः बालिकाश्च) भ्रातृभगिनीसम्बन्धेन निवसन्त उपदर्शिताः कविना। मानार्थं यथा– शकुन्तलायाः पतिगृहगमनप्रस्तावे कण्वः शिष्यमादिशति – भगिन्यास्ते मार्गमादेशय। अत्राश्रमे नार्याः परिवारिकः परिचयः स्पष्टीभवति यत्र सम्बन्धान्तरकल्पनैव न स्यादपिच समानसमाजसिद्धान्तः स्वीकार्यः स्यात्।

योग्यं वरं प्राप्ता नारी समाजेऽभिनन्द्यते जनैः, पितृभ्यामपि। शाकुन्तले पिता कण्वो वदति – 'वत्से! सुशिष्यपरिदत्ता विद्येवाशोचनीयाऽसि संवृत्ता' (चतुर्थाङ्के)। अत्रादराभिनन्दनाभ्यां सह कालिदास

---

१. उ. मेघ. – २३
२. अ. शा. – १.२५

क्वचिद् व्याङ्ग्यार्थरूपेणेदं प्रकाशयितुं समीहते यत् नार्याः निस्सीममुत्तरदायित्वं समाजाय भवति। साऽपि अन्तर्वाहिनी पुरुषशक्तिः यथा सुशिष्येऽशोचनीया विद्यैवान्तःशक्तिर्भवति।

नार्या चारित्रिकदृढतामपरिहार्यां मन्यते कालिदासः। अन्यथा समाजमूल्यस्य पतनं स्वाभाविकं भवेत्। शाकुन्तले तृतीयाङ्के शकुन्तलां लताकुञ्जे निरोद्धुमिच्छन्तं दुष्यन्तं प्रति शकुन्तला स्वचारित्रिकीं दृढतां प्रमाणयन्ती ब्रूते – 'पौरव! रक्ष विनयम्। मदनसन्तप्ताऽपि न खल्वात्मनः प्रभवामि।' अत्र परिणतेऽपि परस्परं प्रणयसम्बन्धे नारी स्वमर्यादावलये वर्तते। असति तथा भारतीयनार्या आदर्श पराहन्येतेति कवेः सूक्ष्मा दृष्टिः प्रतीयते।

रघुवंशे चतुर्दशाध्याये सीतानिर्वासनप्रसङ्गं पद्यमिदं विषयेऽस्मिन् सुतरां प्रणिधानयोग्यं वर्तते यत्–

**वाच्यस्त्वया मद्वचनात्स राजा बह्नौ विशुद्धामपि यत्समक्षम्।**
**मां लोकवादश्रवणादहासीः श्रुतस्य किं तत्सदृशं कुलस्य।।**[१]

इत्यत्र रामस्य कृते सीतया प्रयुक्ताभ्यां 'स राजा' इति शब्दाभ्यां नैकानर्थान् व्यङ्ग्यानुद्घाटयन्ति विद्वांसः। अस्मद्दृष्ट्या तु वातावरणेऽस्मिन् द्वावर्थौ प्रासङ्गिकौ प्रतीयेते। तथाहि– एकया पतिव्रतया पत्न्या पत्युरनुचितनिर्णयस्य विरोध इति प्रथमोऽर्थः, सीतारूपयैकया प्रजया राजनिर्णयमेवम्भूतं प्रति असन्तोष इत्यपरश्चार्थः। लोकापवादकारणादनुचितनिर्णयमाचरितवतो राज्ञः प्रथितं वंशमपि धिक्कृत्य नारी सच्चरित्रा स्वकीयं प्रतिवादसामर्थ्यं प्रमाणयति। एकस्या नार्या मुखादेवम्भूतो दृढोद्गारो वाल्मीकिनाऽपि नैव प्रदर्शितः। परन्तु सामाजिकाकाङ्क्षानुरूपं नारीचरित्रेषु सामर्थ्यं संनिवेशयितं नैव सङ्कुचितो दृश्यते कविः कालिदासः। किञ्च स एष कविः नारीचरित्रे समाजपरिवारादिषु परस्परिकसामञ्जस्याय आवश्यकतानुसारेण समचितोपदेशप्रदानाय च याग्यतामुपस्थापयति। तत्र दिङ्मात्रं यथा– दुष्यन्तराजसभायां शकुन्तलादुष्यन्तयो–रुपस्थितौ तत्कृतां गान्धर्वविवाहगतां त्रुटिमुद्धरन्ती गौतमी परस्परमङ्गीकरणाय समुपदिश्य मातृस्थानीयां भूमिकां द्रढयति गौतमी ब्रूते शकुन्तले–

**नापेक्षितो गुरुजनोऽनया त्वया पृष्ये न बन्धुजनः।**
**एकैकमेव चरिते भणामि किमेकमेकस्य।।**[२]

अत्र कालिदासेन नारी स्त्रीपुरुषसमाजे कर्तव्याकर्तव्योपदेशकतया ग्राह्यश्रोतव्यारूपेण प्रस्तुता।

लज्जा नारीणां भूषणमिति प्रथितिः। क्वचित् सा शक्तिरूपतां धत्ते तासाम्। लज्जा–सुस्वभावौ च नारीमर्यादां वर्धयतः लज्जावनतमावृत्तं च शकुन्तलारूपं विलोक्य दुष्यन्तः सम्मानसुलभैः शब्दैश्चिन्तयति–

---

१. रघुः १४–६१
२. शाकु. ५–१६

**कास्विदवगुण्ठनवती नातिपरिस्फुटशरीरलावण्या।**
**मध्ये तपोधनानां किसलयमिव पाण्डुपत्राणाम्।।**[१]

सौन्दर्याकर्षणमयी नारी लज्जाशीलाऽनुरूपवसनभूषणादिभिराच्छन्ना कथं समाज आदरणीया-भवतीत्यस्योदाहरणदिम्। साम्प्रतिकं परिवेशमालक्ष्य नार्या एवं चित्रं सुतरां प्रणिधानयोग्यं सम्भवेत्। 'नारी स्वातन्त्रमर्हति' इति साम्प्रतिकं प्रवर्तमानमुद्घोषमुशीलयद्भिः समाजशास्त्रिभिः नार्याः स्वातन्त्र्यं वैचारिकमुताहो शारीरिकं स्यादित्यवश्यमुपदेक्ष्यामहे वयं विशेषतो भारतीयसमाजस्थले कालिदासादि-सामाजिककविवरानालोडयद्भिः।

कालिदासकाव्येषु नारी कुत्रचिदपि सामाजिकोच्छृङ्खला नैव वर्णिता। यत्र क्वापि कतिपयसन्दर्भे एष वैचारिकः स्वच्छाचारो दृश्यमानो वर्तते, तत्र तस्या अवमाननमप्यनुपदं प्रदर्शितम्। यथा शाकुन्तले गुरुजनानवज्ञाय रहसि गान्धर्वेण विधिना कृतपरिणयायाः शकुन्तलाया दुष्यन्तकर्तृकः प्रत्यादेशः। नार्याः समाजे किं स्थानमित्यजविलापादिप्रसङ्गाः, पुरुषहृदये किं महत्त्वमिति उत्तरमेघादय उदाहरणभूताः।

एवं स्थालीपुलाकन्यायेन समाजसौख्याय कालिदासोपदर्शितं नारीसामर्थ्यमिहोपन्यस्तमस्माभिः। सामर्थ्यमेव तत् यत् कयाऽपि भूमिकया दायित्वबोधस्य सफलं निर्वाहं सम्पादयति। शक्त्यपरपर्यायं सामर्थ्यं सर्वदा कल्याणकारि विसङ्गतिरहितं भवति, विसङ्गतेश्च मोचयति परिवेशम्। तदिहं प्रदर्शयन् कालिदासः समाजाय नारीमहत्त्वं समुदाहरतीति दिक्।

१. शाकु. ५-१३

# संस्कृतसाहित्ये राष्ट्रचिन्तनम्

**डॉ. कैलाशनाथद्विवेदी**

सुसमृद्धं संस्कृतसाहित्यं पुरातनकालादेव समाजराष्ट्रगतयथार्थदशा यथावत् चित्रीकृत्य चिन्तनाधारेण राष्ट्रजनान् सम्यङ्निदर्शयति। सम्पूर्णसंस्कृतसाहित्ये पर्याप्तरूपेण यत् राष्ट्रचिन्तनं प्राप्यते, तस्मिन् समाजस्य साम्प्रतिकसमस्तसमस्थानां समयोचितं समाधानं, वर्तमानपरिस्थितीनां च सम्यगाकलनमपि संलक्ष्यते। अस्मिन् शोधलेखे संस्कृतसाहित्यान्तर्गतराष्ट्रचिन्तनविषयकविन्दवः संक्षेपेण मया प्रस्तूयन्ते, येऽधोलिखिताः सन्ति।

१. राष्ट्रस्य विराड् बाह्यस्वरूपचिन्तनम्।

२. राष्ट्रस्य अन्तःस्वरूपचिन्तनम्।

३. राष्ट्रियविभिन्नसमस्याचिन्तनम्।

४. परराष्ट्रगतराष्ट्रियसमस्याचिन्तनम्।

५. सुविकसितभाविराष्ट्रस्य भविष्यचिन्तनम्।

६. विविधविषयकराष्ट्रिययथार्थचिन्तनम्।

समृद्धसंस्कृतसाहित्यस्य महाकाव्यगीतिकाव्यगद्यकाव्यनाट्यसाहित्य-चम्पूकाव्यादिषु सर्वासु विधासु व्यापकरूपेण राष्ट्रचिन्तनं वर्तते। अस्मिन् चारुचिन्तने समस्तसंस्कृतसाहित्यकाराणां समयानुकूल-जागरूकता, साहित्यिकोत्तरदायित्वबोधता, समसामयिकयथार्थयुगदृष्टिश्च सर्वत्र विलसति।

(१) संस्कृतसाहित्येऽखिलभारतराष्ट्रस्य बाह्यभौतिकस्वरूपगतचिन्तनं चित्ताकर्षकमस्ति। अखण्डभारतभूमेर्विस्तारविषयकं चिन्तनं चित्रणं च संस्कृतसाहित्यस्य सामान्यतः सर्वविधासु स्वाभाविकमेव संलक्ष्यते। यथा—विष्णुपुराणकारो निर्दिशति—

**उत्तरं यत् समुद्रस्य हिमाद्रेश्चैव दक्षिणम्।**
**वर्षं तद्भारतं नाम, भारती यत्र सन्ततिः॥**[१]

परवर्तिकालिदासप्रभृतिमहाकविभिरपि राष्ट्रस्य आदर्शसीमानां भौतिकबाह्यस्वरूपस्य च चारुचिन्तनपूर्णं चित्रणं कृतमेव। यथा—

**अस्त्युत्तरस्यां दिशि देवतात्मा,**
**हिमालयो नाम नगाधिराजः।**
**पूर्वापरौ तोयनिधी वगाह्य,**
**स्थितः पृथिव्या इव मानदण्डः॥**[२]

एवं रघुवंशे चतुर्थसर्गे रघुदिग्विजयप्रसंगे राष्ट्रस्य बाह्यादर्शसीमाः सुचारुतया संचिन्त्य चित्रिताः महाकविना। शिवराज्योदयमहाकाव्यकारः श्रीधरभास्करवर्णेकरोऽस्य राष्ट्रस्य बाह्यस्वरूपस्य चित्रणं चमत्कारिरूपेण कृत्वा विशेषतो महाराष्ट्रान्तर्गतसह्याद्रेः पश्चिमरत्नाकरस्य रमणीयतायाश्च वर्णनेन राष्ट्रियगौरवं चिन्तयति।

राष्ट्रस्य बाह्यरूपतत्त्वचिन्तने उत्तुंगशृङ्गमयनवाच्छन्नपर्वताः, विशालसलिलराशिना तीव्रप्रवाहिता नद्यो, वैभवसम्पन्ना विचित्रभूप्रदेशाश्चापि सांस्कृतिकपृष्ठभूमौ चित्रिताः संस्कृतकविभिः। पशुपालनकृषि-वाणिज्यक्षेत्रे राष्ट्रस्यार्थिकस्त्रोतः स्वरूपिण्यो नर्मदादिनद्यः सुचित्रिताः सन्ति श्रीरेवाप्रसादद्विवेदि-सदृशसत्कविभिरेवम्—

**त्वत्तीरे हलिनोऽपि सन्ति विमला धर्मप्रिया भारते।**
**वाणिज्यं करवाणि चेत्तव दृशोः पात्रीभवन्नप्यहम्।**
**..........................................त्वां कामधेनुं वृणे॥**[३]

(२) पुरातनसाहित्यिकसांस्कृतिकपृष्ठभूमौ सामान्यतः संस्कृतसाहित्यकारैरपि धर्मदर्शनकला-विज्ञानादि-सांस्कृतिकतत्त्वचिन्तनेन भारतराष्ट्रस्य अन्तःस्वरूपकगीतकाव्यचम्पूकाव्यकृतिषु राष्ट्रस्याऽ-द्वितीयाऽऽध्यात्मिकताशावादिताधार्मिकता पुनर्जन्मवादिता संस्कारपुरुषार्थपरायणता आस्तिकतादिदिव्य-सांस्कृतिकविचारान् समावेश्य अस्याऽन्तःस्वरूपः प्रकटीकृतोऽस्ति संस्कृतरचनाकारैः। राष्ट्रियस्वाभिमानपूर्ण-सांस्कृतिकगौरवमभिलक्ष्य तारस्वरेण स्वराष्ट्रचिन्तनं गायति गीतकारो डॉ. चन्द्रभानुत्रिपाठी—

---
१. विष्णु. ३.१
२. कुमार. १.१
३. रेवाभद्रपीठकाव्यम्, ११२

**अणुरेष भारतीयः। सर्वोऽपि देवभूमेः कण एष भारतीयः। धर्माचरणपरो भव हे वीरराष्ट्रसेवी, गर्वेण वद सदा त्वं पुत्रोऽस्मि भारतीयः। अणुरेष भारतीयः॥** [१]

राष्ट्रस्यऽन्तःस्वरूपसंरक्षणाय संस्कृतिरक्षणमेवात्यन्तं महत्त्वपूर्णं कर्त्तव्यमस्माकमिति चिन्तयति वैद्यः रामस्वरूपशास्त्री—

**देशस्य शत्रून् निष्कास्य बाङ्गलान् स्वतन्त्रतन्त्रं च करोति राष्ट्रम्।**
**भूयोऽपि रक्षाकरणे समर्था सा संस्कृतिः रक्षतु भारतं नः॥**[२]

स्वराष्ट्रस्य प्रकृतिचित्रणे, रम्यषड् ऋतूनां वर्णने च यत्र संस्कृतरचनाकाराणां बाह्यस्वरूपचिन्तनं प्रकटितं, तत्रैव राष्ट्रजनानां नानान्तरिकसद्गुणानां सुन्दरमुद्घाटनं कृत्वा राष्ट्रस्याऽन्तः स्वरूपमपि सम्यग्रूपेण संदर्शितमस्ति। यथा श्रमपरायणकृणकजनाः कथं ग्रामेषु जीवनं यापयन्ति, इति चिन्तयति श्रीनारायण-शुक्लोऽस्मिन् पद्ये—

**कृषौ रताः कर्षकराः समृत्याः, लुनन्ति शस्यानि मृदं कृषन्ति।**
**चयन्ति घासान् मृदुगायनान्ते गदन्ति हास्यानि मिथः सुखानि॥**[३]

विकासपथगामिराष्ट्रियजीवने श्रनस्योपादेयतां प्रतिपादयन् स्व. श्रीधरभासस्करवर्णेकर एवं चिन्तयति स्वकीयश्रमगीतायाम्—

**आलस्याभिभवद् यानि न भजन्ते परिश्रमम्।**
**तानि शीघ्रं विनश्यन्ति राष्ट्राणि सुमहान्तयपि।।**

**अग्रेसराणि राष्ट्राणि सन्ति तान्येव भूतले।**
**योगक्षेमकरो यत्र सेव्यते सततं श्रमः।।**[४]

राष्ट्रीयशिक्षानीतिरपि सुविचिन्तिता संस्कृतरचनाकारैर्यस्यां सविकारो गुरूशिष्यसम्बन्धः, शिक्षास्तरे ह्रासः, दूषितपरीक्षाप्रणाली, स्वार्थान्धप्रबन्धतंत्रादिबहवो विषया विचारिताः सन्ति। अस्मदीये 'गुरु-माहात्म्यशतके' वर्तमानविकृतशिक्षापद्धतिरेव विचिन्तिताऽधोलिखितपद्येषु—

---

१. मङ्गल्या, पृ. ६
२. पारिजातम्, ६.२ अंकः, १९८९, पृ. १३
३. उर्मिलीयचरितम्, पृ. ९
४. श्रमगीता, पृ.१०

**शिक्षकरूपे गुरवः, साम्प्रातन्तु सन्ति वेतनभोगिनः।**
**दासवृत्या समाजे, लभन्ते मानं न तादृशम्॥**

**शिष्यैः परीक्षायान्तु प्रयुज्यन्तेऽनुचितसाधनानि।**
**शिक्षकाः सापमानं च, सहन्ते प्रताडनां तेषाम्॥**

**शिक्षणसंस्थाधिकाः प्रायः कुप्रबन्धकास्तासु सन्ति।**
**बहवोऽध्यापकास्तत्र शोष्यन्ते सर्वदा बहुधा॥**[१]

(३) विद्यमानविविधराष्ट्रीयसमस्यानां (शैक्षिक-सामाजिक-राजनैतिकार्थिकादिविषयाणामपि) चारुचिन्तनं वर्तते संस्कृतसाहित्ये राष्ट्रेऽस्माकं समस्तसामाजिकसमस्यासु सर्वसम्बन्धानां केन्द्रीभूता नारी सुविचारिता संस्कृतकविभिः स्वकृतिषु। यथा कालिदास एवं चिन्तयति महिममयी नारीविषये—

**गृहिणी सचिवः सखीमिथः प्रियशिष्या ललिते कलाविधौ।**
**करुणाविमुखेन मृत्युना, हरता त्वां वद किं न मे हृतम्॥**[२]

राष्ट्रस्य सम्पूर्णमानवसमाजे नारीणां दलितजीवनमपि भृशं चिन्तनीयम् । डॉ० दीक्षितपुष्पा समासोक्त्या नारीजीवनस्य विडम्बनामेवं चिन्तयति—

**भूतले परिभृदितलतिका यः स्वयं समुपस्करोति।**
**स द्रुमोऽपि तदीयहृदयं निर्दयं शूला करोति॥**[३]

राष्ट्रे दूषितसामाजिककुप्रथाप्रपीडितनारीणां दुःखस्थामभिलक्ष्य संस्कृतरचनाकाराः चिन्तनशीला एव सन्ति। समाजे यौतुकपिशाचपीडिता युवत्योऽहर्निशं भृशं पीडयन्ति संस्कृतकवीन्। चिन्ताकुलास्ते भारतीयनारीं यथार्थधरातले पश्यन्तः स्वकीयं संशोधनपरायणस्वरमेव मुखरयन्ति। श्रीमद् ओमप्रकाशठाकुरो 'भारतीयनारीति' शीर्षककवितायां सत्यमेव कथयति—

**भर्ता पश्यति धनसंभारं, श्वश्रूरालोकयते स्वर्गम्।**[४]

अर्थं विनाऽनर्थकारिण्यतिशोचनीयाऽवस्थाऽस्मिन् राष्ट्रे। अर्थाऽभावेऽनेकापराधा वर्धन्ते समाजेऽह-र्निशम्। चौर्यवृत्तिचौर्यापणत्व मूल्यवृद्धिपदार्थमिश्रणमहार्धतामुद्रास्फीतिमदिरापानभिक्षावृत्तिदस्युप्रवञ्चनाप-

१. गुरु, ९८-१००
२. रघु०८.६९
३. दूर्वा. १५,१९८९, पृ.२३
४. दूर्वा. १४.१९८९, पृ०१८

हरणप्रभृत्यनेकार्थिकपराधान् प्रति व्याकुला संस्कृतरचनाकाराः प्रायः चिन्तनपूर्णाः सरसरचनाः प्रस्तुवन्ति। यथा—गीत कन्दलिकाकारः चिन्तनयन् कथयति कुप्रथां वीक्ष्य समाजे—

**श्रमजीवो जीविकाविहीनः। विविधाभावैर्व्यथितो दीनः।**
**चौरवृत्तिमवलम्ब्य वाणिजैरर्जिमधिकमकाले॥**[१]

सभ्यसमाजेऽप्यार्थिकोन्मादवशादापणेषु सर्वत्र शुद्धखाद्यपदार्थानामभावो दरीदृश्यते। मिश्रणसंस्कृतिमवलोक्य दुश्चिन्ताकुलः परमानन्दशास्त्री सत्यमेव कथयति—

**नगरे नगरे ग्रामे ग्रामे मिश्रितपण्यानां प्राचुर्यम्,**
**शुद्धं क्वापि पदं न पदार्थः प्रतिहट्टं दृष्टं चातुर्यम्॥**[२]

राष्ट्रे चिन्ताजनको जातिवादो वर्गवादो वापि विचिन्तितः संस्कृतरचनाकारैः। (देवदूतम् ६८) यदा कदा, यत्र-तत्रातंकवादस्य हिंसायाश्च ताण्डवं चिन्ताजनकमस्ति। यथाऽस्मदीये वसुमित्रविजयरूपकेऽस्मिन् सन्दर्भे चिन्तितमेवम्—

**आतंकवादं जननाशकं त्वं धर्मान्धतां तीव्रविषञ्च रुन्धि।**
**हिंसानलं देवि विनाशने तु तेजोमयी तत्परता तवैव॥**[३]

राष्ट्रे न केवलं सामाजिकार्थिकसांस्कृतिकक्षेत्रेष्ववमूल्यमपितु राजनैतिकप्राशासनिकक्षेत्रयोह्रासोऽपि चिन्ताजनकोऽस्ति। राष्ट्रनेतृणां प्रशासकानाञ्च चारित्रिकापकर्षमेवं चिन्तयति सुकविः सुधाकरशुक्लः स्वकीये देवदूतकाव्ये—

**नेतारश्चेदपधनधियो निष्क्रियोत्कोचजीवाः,**
**मिष्टावाचः कपटपटवो वंचकाः संचिताशाः।**

**नाशाय स्युः स्वभुवि सुलभाः पेशलाः श्वेतवेषैः**
**विःसिद्धान्ताः कथय न कथन्नङ्क्ष्यति त्वेष देशः॥**[४]

---

१. गीतकन्दलिका: पृ० ४५-४७
२. दूर्वा. १४, पृ० ३०
३. पारिजातम् ६.६. पृ.२१, नाट्यसृतम् पृ०३०
४. देवदूतम्. ७९

राष्ट्रियशोषकशासकानां रक्षणोत्तरदायित्वे व्यंग्यमेकं चिन्तनीयं वर्ततेऽस्मिन् रूपके 'एकदा रंगमंचे'

राजा –**अपि देशे सर्वं कुशलम्!**

महामंत्री–**यदा भवान् साधूनां भक्षको देशे अमंगलकुतः!**[१]

राष्ट्रे धर्मराज्यसंस्थापनायै प्रशासकानां प्रस्खलितचरित्रे सत्यपरायणहरिश्चन्द्रस्य निदर्शनं प्रस्तौति डॉ. रामजी उपाध्यायः सत्यहरिश्चन्द्रोदयोपन्यासे–''सत्यमयचारित्र्योदार्यनिदर्शनभूतः स्वचरितस्यौदार्येण कश्चित् पुरुषो महान् भवति धर्मराजे।''२

स्वकीयराष्ट्रे श्रमपरायणं ललितं लोकजीवनं सुचिन्तितं संस्कृतरचनाकारैः सरसगीतरचनात्मक दृष्ट्या। श्रीपरीक्षितशर्मा धीवराणां श्रमपरायणसंगीतात्मकस्वरे एवं गायति—

**आयाहि रे, आयाहि रे! विहायसि सरागरश्मिचन्द्रमाः।**

**तनोति सान्द्ररोचिमञ्जुचन्द्रिकाः।**

**सिन्धुरावघोषिता रोदसी कन्दराः, यान्तु यात्र पात्रचालकाः**

**सधीवराः! आयहि रे, आयाहि रे!!**

(४) राष्ट्रेऽस्मिन् परराष्ट्रगताऽनेकज्वलन्तसमस्याः सार्वजनिकराष्ट्रियजीवनं कथं प्रभावयन्ति, सर्वे संस्कृतरचनाकाराः सर्वथा प्रजागरिताश्चिन्तनपरायणाश्च सन्ति।

स्वराष्ट्रसीमान्ते विदेशिराज्येषु राजनीतिकपरिवर्तनेन अस्माकमार्थिकसामाजिकराजनैतिकसामरिक–वैदेशिकाद्यवस्थाः कथं प्रभाविताः भवन्ति, अस्मिन् अतिमहत्त्वपूर्वविषयेऽपि विचारितवन्तो विद्वांसः संस्कृतरचनाकाराः। दृष्ट्याऽनया डॉ. रामकृष्णशर्मणो नवीननाट्यकृति–बांग्लादेशोदयमस्य श्रेष्ठं निदर्शनमस्ति।

अस्माकं राष्ट्रस्य राजनैतिकसमर्थनेन यद्यपि बांग्लादेशस्य प्रादुर्भावोऽभवत्, किन्तु समागतशरणार्थि–जनानां महाभारेणाऽस्माकमार्थिकस्थितिरपि पर्याप्तरूपेण प्रभाविताऽभवत्। बांग्लादेशोदयेऽस्य महत्त्वपूर्णविषयस्य सुन्दरं साहित्यिकं चिन्तनं वर्तते। मयापि तात्कालिकीमिमां घटनां वीक्ष्य ''बंगदेशविमुक्ति–विषयकरचनायामेवं विचिन्तितमस्ति''

---

१. अर्घ्यम्, पृ०५०
२. सत्यहरिश्चन्द्रोदये, पृ०१२

**केचिद् बभूवुः शरणागतास्तु,**
**केचिच्च मुक्तेर्बलिदानिवीराः।**
**युद्धे पराजित्य नृशंसपाकान्,**
**साहाय्यवन्त खलु भारतीयाः॥**[1]

सम्प्रत्यपि स्वराष्ट्रे सीमान्तपाकचीनादिपरराष्ट्रसमागतातंकवादिहिंसकानां भयंकरी समस्याऽतिचिन्ता-जनका वर्तते शान्तिमयराष्ट्रियजीवने। संस्कृतसाहित्येऽतिव्यापकोदारदृष्ट्या 'विश्वबन्धुत्वभावना' प्रकटिता सुधीसाहित्यकारैः परस्परविद्वेषाविश्वासविनाशनार्थम्। विश्वशान्त्यै उपनिषत्कारस्येदं चारुचिन्तनमत्यन्तं महत्त्वपूर्णं वर्तते-

**ईशावास्यमिदं सर्वं यत् किञ्च जगत्यां जगत्।**
**तेन त्यक्तेन भुञ्जीथा मां गृधः कस्यस्विद्धनम्॥**[2]

त्यागभावना, समत्वबुद्धिर्निश्छलतादिदिव्यविचाराः विश्वबन्धुत्वप्राप्त्यै परमावश्यकाः सन्ति। अस्मिन् सन्दर्भे विद्वत्कविः नीलकण्ठदीक्षितः सम्यग्रूपेण चिन्तयत्येतम्-

**त्यक्तव्यो ममकारस्त्यक्तुं यदि शक्यते सोऽयम्।**
**कर्त्तव्यो ममकारः, किन्तु स सर्वत्र कर्त्तन्यः॥**[3]

अर्वाचीनसंस्कृतसाहित्येऽपि व्यापकविश्वबन्धुत्वस्य परमोदारदृष्ट्येमान् प्रति परमोदारचिन्तनं वर्तते। पं. चन्द्रभानुत्रिपाठी स्वमङ्गल्यामेवं विचारयति-

**विश्वं दृष्ट्वा विपन्नं बलिभिरनुदिनं दुर्बलान् शोषयद्भिः,**
**विश्वात्माऽयं विषण्णोऽभवदुदितदयः पञ्चशीलव्रतस्य।**
**स्वत्वं रक्षन्तु सर्वे, प्रभुरतनुबलो न प्रबाधेत् हीनं,**
**राष्ट्राणामाश्रितानामिति दृढमकरोत् सङ्घमात्मप्रभावात्।**[4]

परमप्रतिभाशालिराष्ट्रजनानामाजीविकायै परदेशपलायनमपि परमचिन्ताजनकमस्ति। मेधाविनो युनकाः परदेशपलायनं न कृत्वा स्वदेशे नगरे वा ग्रामे वा कार्यरता भूत्वा निवसन्तु इति चिन्तयति श्रीविश्वनाथकेशव-छत्रेमहाभागः स्वकीये सुभाषचरिते-

---

१. काव्यमाला २००३, पृ. ३९
२. ईशावास्योपनिषद् १
३. शान्तिविलासः पृ. १३
४. मङ्गल्या, २१

**देशान्तरेषु वसतामपि जीवनार्थं यूनां न मातृभक्तिरिति प्रतीतम्। ग्रामान्तरे वसति नेत्रमहोत्सवाय, स्वग्रामवासि शुनकोऽपि नरः पुनः किम्॥**[१]

(५) संस्कृतसाहित्ये भाविभव्यभारतराष्ट्रस्याऽपि चारुचिन्तनं वर्तते। स्वकीयं स्वर्णिमातीतमनुचिन्त्य चिन्तनशीलनागरिकैर्भाविभारतेऽप्युज्ज्वलस्वप्नावतारणा कार्या। कविः कथयति कमनीयचिन्तनाधारेण–

**अधीत्य सम्यग् विगतेतिहासं भविष्यकालोज्ज्वलदिव्यरम्याः।**
**स्वप्ना विलोक्या युवकैश्च यत्नैस्ते सत्यसृष्ट्यामवतारणीया॥**[२]

भाविनो भव्यभारतस्य श्रेष्ठस्वरूपसुदृढीकरणाय राष्ट्रियैकताऽपरिहार्या–इति चिन्तयन्ति संस्कृत-साहित्यकाराः। 'विस्मृतभेदाः सन्तः' शीर्षककवितायामेवं चिन्तयन् कथयति श्रीमहाबलेश्वरभट्टः–

**भाषाधनमतजातिविभेदो हृदये मा भवतु**
**दुःखितदीनजनानुन्नेतुं हस्ताः प्रसरन्तु।**
**प्रवहति रक्तमभक्तं मातुः भेदो मा भवतु॥**[३]

सर्वोपरि मत्वेवं चिन्तयन् प्रेरयति स्वराष्ट्रजनान्–

**गहनारण्ये घनान्धकारे बहुजना ये स्थिता गह्वरे।**
**तत्र मया सञ्चरणीयम्, लोकहितं मम करणीयम्॥**[४]

भाविभारते मातृभूमेर्गौरवरक्षायै सर्वे संस्कृतसाहित्यकाराः चिन्तनपरायणाः संलक्ष्यन्ते। सङ्कल्प-सिद्धिर्नामकगीतिरूपकेऽस्मिन् सन्दर्भेऽस्मदीयाऽप्यवधारणास्ति–

**रक्षा भवेद्राष्ट्रभुवो भविष्ये, शान्तिः समृद्धिः सततं भवेच्च।**
**भूयात् सुकीर्तिः भरतावनेस्तु देशेषु देदीप्यो देश एषः॥**[५]

(६) संस्कृतसाहित्ये राष्ट्रियविविधविषयसम्बन्धिचिन्तनमप्यतिगम्भीरतापूर्वकं कृतमस्ति। संस्कृत-रचनाकारैः राष्ट्रस्य पूज्यश्रद्धाभावेन सचेतनरूपेण चित्रणं कृतमेव। यथा–अथर्ववेदे ऋषिरथर्वो राष्ट्रदेवतामेवं चिन्तयति मातृभूमिम्–''**यत् ते मध्यं पृथिवि यच्च नभ्यं, यास्त उजस्तन्वः सम्बभूवुः॥ तासु नोधेह्यभिनः**

१. सुभाषचरिते, ९.१९
२. सुभाष, ९.२०
३. गीतसंस्कृतम्, पृ, २
४. गीतसंस्कृतम्, पृ. ३
५. गीर्वाणसुधा, सित, १९८७, पृ. २३

**पयस्व माता भूमिः पुत्रोऽहं पृथिव्याः। पर्जन्यः पिता स उ नः पिपर्तु।**''[१] कालिदासोऽप्ययो–ध्यायाः सरय्वा धातृत्वं कल्पयन् श्रीरामोद्वारेण प्रमाणीकरोतीमामवधारणाम्–

**यां सैकतोसंगसुखोचितानां, प्राज्यैः पयोभिः परिवर्धितानाम्।**
**सामान्यधात्रीमिव मानसं मे सम्भावयत्युत्तरकोसलानाम्॥**
**सेयं मदीया जननीव तेन, मान्येन राज्ञा सरयूर्वियुक्ता।**
**दूरे वसन्तं शिशिरानलैर्मां तरङ्गहस्तैरुपगूहतीव॥**[२]

वस्तुतो विकासस्य तीव्रगतिमानेतुं वैज्ञानिकप्रगतिलाभाय पुरातनराष्ट्रियविज्ञानविषया रचनात्मकदिशि पुनर्मूल्याङ्कनदृष्ट्या सुविचारिताः श्रीभि. वेलणकरप्रभृतिविद्वद्भिः। भारतीयभौतिकीरसायनज्यामितिगणित–ज्योतिषचिकित्साद्यनेकविषयेषु श्रीवेलणकरो विचारपूर्णं विषदं विवेचनं कृत्वोनं गीर्वाणसुधामासिक-पत्रिकायामेकादशे खण्डे १.११ अङ्केषु प्रकाशितवान् धारावाहिकरूपेण। राष्ट्रे क्रीडाक्षेत्रेऽनवरतं ह्रासमवलोक्य राष्ट्रियप्रतिभाशालिक्रीडाप्रेमियुवकानां निर्देशनाय सम्यग्रूपेण चिन्तनं कृत्वा डॉ. रुद्रदेवत्रिपाठी क्रीडातरङ्गिणीं ग्रन्थस्य रचनामकरोत्। एवं विविधविषयकराष्ट्रियचिन्तनमपि वर्तते संस्कृतसाहित्ये।

संक्षेपे, कथयितुं शक्यते यत् संस्कृतसाहित्ये राष्ट्रचिन्तनमत्यन्तं गम्भीरं, दिग्बोधकमुपादेयञ्चास्ति। अस्याऽनुचिन्तनं मननं कार्यान्वयनं च परमावश्यकं भाविविकासाय। इति शम्।

१. अथर्व, १२.१.१२
२. रघु. १३.६२–६३

# काव्यशास्त्रे दोषस्वरूपविमर्शः

**डॉ. उमाकान्तचतुर्वेदी**

दुष्धातोर्घञ्[१]प्रत्ययेन दोषशब्दो निष्पद्यते। काव्यस्वरूपनिरूपणप्रसङ्गे काव्यस्यापकर्षकतयातीवनिषिद्धो दोषः। शारदातनयोक्तवचनानुसारेण साहित्यलक्षणे विद्यमानेषु द्वादशविधेषु सम्बन्धेषु इदमन्यतमं स्थानं भजते दोषहानम्। तद्यथा–

**दोषहानं गुणादानं तथालङ्कारयोगिता।**
**रसावियोग इत्येते सम्बन्धाः कथिता बुधैः ॥**[२]

''तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापीति''[३] काव्यप्रकाशीयकाव्यलक्षणेऽपि शब्दार्थयोरनिवार्यविशेषणत्वेनादोषवित्यस्य प्रयोगो विहितः। एवमेवान्येऽप्याचार्याः प्रायेण निर्दोषयोरेव शब्दार्थयोः काव्यत्वं स्वीचक्रुः उक्तञ्च—

**दोषाहानं गुणादानं कर्तव्यं नियमात्कृतौ।**
**कामचारः पुनः प्रोक्तोऽलङ्कारेषु मनीषिभिः ॥**[४]

एवं दोषाभावोऽवश्यमेवानल्पं महत्त्वमादधाति काव्यविदां समाजे इति नाविदितं विदुषाम्। किञ्च, सति दोषे गुणादेरप्यकिञ्चित्करत्वाद्दोषहानमेव परमं पवित्रं तत्त्वं काव्यसृष्टाविति सर्वेऽपि निरर्गलमुद्घोषयन्ति। ''**आपदोषतैव विगुणस्य गुणः**'' इति न्यायात्सति दोषाभावे गुणादिकं विनापि किञ्चिदाह्लादसम्भवात्काव्य लक्षणे प्रायेण गुणालङ्कारात्प्रागुपादानं दोषाभावस्ये'ति प्रतीमः। दोषाणामभावो दोषाभाव इति षष्ठीसमासे, तन्निरूपणीये एवाभावस्य स्वरूपतो निरूपणार्हतया प्रतियोगिनिरूपणाधीननिरूपणीयत्वादादावस्मिन्सन्दर्भे प्रथमं दोषसामान्यलक्षणमेवामूलतो विचार्यते।

---

१. अष्टाध्यायी–भावे, ३.३.१८
२. भावप्रकाशनम् (चौखम्बासंस्करणम् १९८३) षष्ठोऽधिकारः पृ. २०१
३. काव्यप्रकाशः (चौ. सं.सं.वि.सं.२०५६) सूत्रम्, १, का. ४ पूर्वार्धः
४. काव्यप्रकाशः, साहित्यचूड़ामणि टीका, पृ. २०, का.हि.वि.वि. संस्करणम्, १९८१

तत्रालङ्कारशास्त्रीयग्रन्थेष्वादिमं नायशास्त्रीयमिति नात्र कश्चन विवेकशीलो विद्वान् विवदेत। तत्र दोषविशेषेषूल्लिखितेष्वपि दोषसामान्यलक्षणं शब्दतो न कृतम्, अथापि गुणप्रतिपादनावसरे दोषा एव विपर्यस्ताः काव्येषु गुणाः भवन्तीति दोषाणां भावात्मकत्वमङ्गीकृतन्तेन। तथा हि—

**एते दोषास्तु विज्ञेया सूरिभिर्नाटकाश्रयाः।**
**एत एव विपर्यस्ताः गुणाः काव्येषु कीर्तिताः॥**[१]

एतेन 'गुणाविपरीतार्थप्रयोजकाः दोषाः' इति दोषसामान्य लक्षणं भरतमतेन स्थिरोकर्तुं शक्यम्। गुणाश्च काव्योत्कर्षप्रयोजका इत्यप्यायातम्। अत्र भरतमुनिना शब्दतः सामान्यदोषमलक्षयताऽपि तद्विपरीततया गुणपरिचयन्दातुञ्चेष्टितम्। वस्तुतः एकस्मिन् स्वरूपतो विज्ञात एव तद्विपरीततयान्यस्य बोधः कर्तुं शक्यमन्यथा उभयोरपि ज्ञानमसम्भवं स्यात्। किञ्च, गुणदोषयोरयं विपर्ययात्मकः सम्बन्धो नहि प्रथमं भरतेनैवोद्घाटितोऽपितु कौटिल्योऽपि स्वीयेऽर्थशास्त्रे गुणदोषयोर्विपर्ययात्मकं सम्बन्धमुल्लिलेख। अर्थशास्त्रे लेखगतानां पञ्चानां दोषाणामुल्लेखो वर्तते। तेष्वन्यतमं 'सम्प्लव' नामकं दोषं परिभाषयन्नाचार्यो वदति—**अवर्गे वर्गकरणं वर्गे चावर्गक्रिया गुणविपर्यासः सम्प्लवः**[२] इति। मन्ये नाट्यशास्त्रेऽनयैवधारणया एत एव विपर्यस्ताः गुणा इति वैपरीत्येनोक्तम्। यद्यपि नाट्यशास्त्रस्य 'सिद्धिव्यञ्जके' नाम्नि सप्तविंशेऽध्याये प्रसङ्गान्तरेण—**एतानि यथास्थूलं घातस्थानानि काव्यस्ये**[३]'ति निगदितम्। परमत्र 'घात' पदस्यार्थः विनाशोऽपकर्षो वेति न स्पष्टीकृतम्। न चाभिनवभारत्यामपि विषयेऽस्मिन् किमपि व्याख्यातम्। तथापि काव्यस्यघातस्थानानीत्यस्यापकर्षप्रयोजकानी-त्येवार्थः स्थिरीकर्तुं शक्यते।

विष्णुधर्मोत्तरपुराणं यद्यप्यलङ्कारशास्त्रेण सम्बद्धं नास्ति तथाप्येकस्मिन् स्थले पुराणकारेणाश्लीलबन्धं काव्यं सहृदयहृदयानामुद्वेजकं दुःखदञ्च भवतीति कीर्तितम्। उक्तञ्च—**उद्वेजनीयन्तु सतां तदुक्तमश्लीलबन्धं सुखदं न काव्यम्**[४]**।** अत्र सहृदयहृदये जातस्य दुष्टकाव्याद्दुष्प्रभावस्य वर्णनमस्ति। दोषाः काव्यानन्दे बाधका एव न, अपितु उद्वेजका अपि भवन्तीति पुराणकारमतसर्वस्वम्।

अलङ्कारशास्त्रे भीष्म पितामहोभामहः स्वीये काव्यालङ्कारनाम्निग्रन्थे चतुश्शतीषु कारिकाषु काव्य-प्रमेयान्निरूपितवान्। तत्र 'पञ्चाशतादोषदृष्टिरि'त्यपि तेनोद्घोषितम्—

---

१. नाट्यशास्त्रम् (काव्यमाला), १६-९५
२. कौटिल्य-अर्थशास्त्रम्, २.२८.१०.६४, (लाहौरप्रकाशन १९२५ ई.)
३. नाट्यशास्त्रम् (काव्यमाला) २७.३१
४. विष्णुधर्मोत्तरपुराणम्, खण्ड ३, १५-१५(प्रकाशक-वेंकटेश्वरप्रेस मुम्बई)

**षष्ट्या शरीरं निर्णीतं शतषष्ट्या त्वङ्कृतीः।**
**पञ्चाशतादोषदृष्टिः सप्तत्या न्यायनिर्णयः॥**[१]

परं सूक्ष्मतया विचारेण न केवलं पञ्चाशताऽपितु शतद्वये कारिकाणां दोषदर्शनं कृतं तेन। भामहस्य दोषदृष्टिर्वस्तुतो मम्मटात्प्राचीनेष्वालङ्कारिकेषु विचित्रा महत्त्वपूर्णा चेति वक्तुमुत्सहे। परमेतावतानिर्णयतापि तेन शब्दतो दोषसामान्यलक्षणं न कुत्राप्युद्घुष्टम्। केवलमनेकेषु स्थलेषु काव्यविरोधितत्त्वरूपेणोल्लेखः कृतः। यथा—

**पदमेकं परं साधु नार्वाचीननिबन्धनम्।**
**वैपरीत्याद्विपर्यासं कीर्तेरपि करोति तत्॥**
**सर्वथा पदमप्येकं न निगाद्यमवद्यवत्।**
**विलक्ष्मणा हि काव्येन दुःसुतेनेव निन्द्यते॥**[२]

आचार्योऽयं काव्ये दोषलेशमपि नाभिमर्ष्टुमीहते। तथा चोक्तम्—

**तदल्पमपि नोपेक्ष्यं काव्ये दुष्टं कथञ्चन।**
**स्याद्वपुः सुन्दरमपि श्वित्रेणैकेन दुर्भगम्॥**[३]

एवमेवानेकत्र '........कवयोनप्रयुञ्जते, न प्रयोज्यं कदाचन[४] प्रभृतीनि वाक्यानि काव्ये दोषस्योद्वेजकत्वसरणीमेव समेधयन्ते। सम्पूर्णस्य भामहसाहित्यस्यालोचने विज्ञातं भवति यदयमपि दोषस्य काव्यस्यापकर्षकत्वमेव सामान्यलक्षणमङ्गीकरोति।'

साहित्यसिद्धान्तसुरक्षायां धृतभुशुण्डिना दण्डिनापि दोषस्वरूपविषये न सुस्पष्टं किमप्युक्तन्तथाप्यस्य दोषसम्बन्धिनो विचारानवेक्ष्य वक्तुं युक्तं यदयं गुणदोषयोरुभयोरपि भावात्मकतामेवोरीकरोति। उपमादोषमुपेक्षां कुर्वन्नसौ ब्रूते—'यत्र धीमतामुद्वेगो न भवति तत्र न सम्भवति उपमादोषः। उक्तञ्च तेन—

**न लिङ्गवचने भिन्ने न हीनाधिकतापि वा।**
**उपमा दूषणायालं यत्रोद्वेगो न धीमताम्॥**[५]

---

१. काव्यालङ्कारः (भामहः) १.६
२. काव्यालङ्कारः (भामहः) ५.६, १.११
३. काव्यालङ्कारः (भामहः) १.१५
४. काव्यालङ्कारः (भामहः) ५.६१
५. काव्यादर्श (दण्डी) २.५

एवं सहृदयोद्वेजकत्वं दोषत्वमिति दोषस्वरूपमूरीकुर्वताचार्येण दोषाः वर्गद्वये विभक्ताः। प्रथमवर्गे भामहस्वीकृताऽपार्थात्वादयो दश दोषाः एतेषां केवलं गुणविपर्ययत्वमेव नापितुभावात्मकत्वमप्यङ्गीकृतम्। द्वितीयवर्गे केवलं गुणविपर्ययस्वरूपाः दोषाः। श्लेषप्रसादादीनां दशानां गुणानां चर्चायाः अनन्तरं भूयोऽपि वैदर्भीमार्गस्य जीवातुत्वेन, गौडमार्गस्य च विपर्ययत्वेनैतेषां दशानां गुणानां चर्चा कृता। उक्तञ्च तत्र तेन—

**इति वैदर्भमार्गस्य प्राणाः दश गुणाः स्मृताः।**
**एषां विपर्ययः प्रायो दृश्यते गौडवर्त्मनि॥**[१]

एवमत्र दशषु गुणेषूदारता-ओज-समाधिबर्जं शेषाणां सप्तानां गुणानां विपर्ययत्वं सङ्केतयति दण्डी। येष्वर्थव्यक्तेर्विपर्ययो नेयार्थत्वम्, माधुर्यस्य च वैरस्यमित्यादिकं विलिखतम्।[२] अत्रैवैतेषां दोषाणां मूलत्वेन ग्राम्यत्वमप्यूरीकृतम्। तथा हि—'इति ग्राम्योऽयमर्थात्मा वैरस्याय प्रकल्प्यते।[३]' ग्राम्यत्वदोषो वैदर्भगौडयोरुभयोर्मार्गयोर्हेयोऽस्ति, शेषाः दोषाः केवलं वैदर्भमार्गे एवाग्राह्याःभवन्तीत्युक्तम्—

**एवमादि न शंसक्ति मार्गयोरुभयोरपि।**
**नेदृशं बहुमन्यन्ते मार्गयोरुमयोरपि॥**[४]

अर्थशास्त्रेऽपि सर्वे दोषाः गुणविपर्ययात्मकतयनोक्ताः, अपितु केवलं 'सम्प्लव' नामको दोषविशेषो गुणविपर्ययत्वेनोक्तः। एवमर्थशास्त्रेऽपि दोषाणामभावात्मकतया स्वीकृतिरस्ति। तत्रापि दोषाणां वर्गद्वयम्—एकं भावात्मकमपरं गुणविपर्ययात्मकञ्च। गुणाः दोषविपर्ययात्मका इति नाट्यशास्त्रीयावधारणापि दण्डिना समतामिति। काव्यादर्शे केचन गुणाः निषेधात्मकपद्धत्या लक्षिताः, यथा—'समं बन्धेष्वनियमः, अर्थव्यक्तिरनेयत्वम्। अनिष्ठुराक्षरप्रायं सुकुमारमिहेष्यते[५]। इत्येते गुणाः दोषाणामभावतयैव उक्ताः। अत एवाचार्यो मम्मट एतान् गुणत्वेन न स्वीकरोति[६]। एवं महाकवेर्दण्डिनो दोषविषयकमालोचनं पूर्ववर्तिभिर्नाट्यशास्त्रार्थ-शास्त्राद्युक्तविचारैः' प्रभावितमस्ति। यद्यपि काव्यादर्शे दोषस्यविपर्ययो गुणः, गुणस्य वा दोष इति शब्दतो नोक्तं तथापि द्वयोस्स्वीकृतिस्तत्र व्यज्यते। अतो वक्तुं शक्यं यद्दण्डी गुणदोषयोर्भावात्मकतयैव स्वीकृतिं प्रददाति काव्यादर्शे।

---

१. काव्यादर्श (दण्डी) १.४२
२. काव्यादर्श (दण्डी) १.४३, ४६, ६३,६९,७२,७३
३. काव्यादर्श (दण्डी) १.६३
४. काव्यादर्श (दण्डी) १.६७,७५
५. काव्यादर्श (दण्डी) १.४७,७३,६९
६. काव्यादर्श (मम्मट) ८.७२

संस्कृतकाव्यशास्त्रे शब्दतो दोषनिरूपणे वामनः प्रथम आचार्यः यद्यपि पूर्वाचार्यै र्दोषसम्बन्धिनी स्वीयावधारणा भावाभावात्मकरूपाभ्यामुपस्थापिता, तथापि शब्दतो दोषस्वरूपदर्शनं सर्वप्रथमं वामनाचार्येणैव कृतम्। वामनस्य दोषसम्बन्धिन्यवधारणा नाट्यशास्त्राद्विपरीता। भरतमुनिः 'एत एव विपर्यस्ता गुणाः काव्येषु कीर्तिता' इति दोषस्वरूपं भावात्मकतयोपस्थापयति, परन्तु वामन एतद्विपरीतं 'गुणविपर्ययात्मका दोषाः' इति दोषस्वरूपमभावात्मकवृत्त्या स्वीकरोति। परं नेयं पद्धतिर्नूतना। प्राक्तनेषु कौटिल्यः स्वीयेऽर्थशास्त्रे '**सम्प्लव**'[१] नाम्नो दोषविशेषस्य प्रसङ्गे गुणविपर्यासः सम्प्लवः इत्युक्तवान्। एवमेव कामसूत्रेऽपि नायकस्य गुणदोषयोर्निरूपणप्रसङ्गे '**गुणविपर्ययदोषाः**[२]' इत्युक्तम्। परं काव्यशास्त्रीयपरम्परायामाचार्यो वामन एव सर्वप्रथमं गुणविपर्ययात्मकत्वेन दोषस्वरूपसमुद्धाट्य महत्त्वपूर्णं यशो लभते। किन्तु वामनोक्तदोषलक्षणे विपर्यय पदस्य किं तात्पर्यम् अभावो वैपरीत्यं वेति सुस्पष्टं नास्ति। दोषलक्षणात्प्राग्वामनो वृत्तौ दोषं काव्यसौन्दर्याक्षेपहेतुतया हेयत्वेनाङ्गी करोति—**काव्यसौन्दर्याक्षेप-हेतवस्त्यागाय दोषाः विज्ञातव्याः**[३]। यदि दोषा केवलं गुणाभावस्वरूपाः स्युस्तदा काव्यसौन्दर्याक्षेपे'ति विशेषणं दोषस्य न स्यात्। एतेन सुस्पष्टं भवति, यद् वामनमते दोषाः काव्यशोभायाः (गुणस्य) केवलमभावस्वरूपा एव नापितु भावात्मकरूपेण गुणानाहत्यकाव्ये वैरुप्योत्पादका अपि भवन्ति। एतेन गुणविरुद्धता दोषाणां सिद्ध्यति। वामनाचार्यो दोषान्न केवलं गुणविरोधित्वेनापितु काश्चिद्गुणाभावरूपेणा-प्यङ्गीकरोति। उक्तञ्च—'**ये त्वन्ये शब्दार्थदोषाः सूक्ष्मास्ते गुणविवेचने वक्ष्यन्ते**[४]'। मन्ये एतद्विवेचनस्य प्रेरणा दण्डिनो लब्धाऽनेन। अर्थापत्त्यावबोधसुकरतया एतेषां सूक्ष्मदोषाणां विवेचनं वामनेन गुणाधिकरणे कृतम्। गुणविपरीतदोषाणां परिज्ञानमर्थापत्त्याऽऽञ्जस्येन नैव सम्भाव्यते। अत एव दोषदर्शननामाधिकरणे स्वातन्त्र्येण विवेचनस्यावश्यकतामनुभूता। उक्तञ्च—'**सौकर्याय प्रपञ्चः**'[५] अस्मिन्नधिकरणे वर्णिताः पदवाक्यार्थगताः स्थूलत्वेन काव्यसौन्दर्यस्य विघाते समर्थाः। गुणविपर्ययत्वेन प्रतिपादिताः गुणाभावस्वरूपाः सूक्ष्मदोषाः गूढतया काव्यसौन्दर्यस्य प्रविघाते तथा न समर्थाः। एवं वामनोक्तदोषाणां वर्गद्वयम्-तत्र केचन गुणवैपरीत्यस्य, केचन च गुणाभावस्य सूचकास्सन्ति। दोषलक्षणे पठितो 'विपर्यय'शब्दो वैपरीत्याभाव-योरुभयस्सूचकः। वस्तुतो वामनकाले केचन प्रथिता अपि दोषा अग्राह्यास्सञ्जाताः। तेषां भावात्मकसत्ताया अस्वीकरणमसम्भवमासीत्। गुणविपर्ययात्मकाः दोषा इत्युक्त्या वामनेन विलोमतो भावात्मकतयैवाङ्गीकृताः।

---

१. अर्थशास्त्रम् (कौटिल्यः) २.२८.१०.६४
२. कामसूत्रम्, ६.१.१५, पृ. ३०
३. काव्यालङ्कारसूत्रम्, (वामनः) पृ. ६९
४. काव्यालङ्कारसूत्रम्, (वामनः) पृ. ११२(डॉ. नागेन्द्र सम्पादित, दिल्ली वि.सं. २०११)
५. काव्यालङ्कारसूत्रम्, (वामनः) पृ. १.७.३

दोषस्वरूपनिर्णये श्रीमता रुद्रटेनापि प्राचामेवानुकृतम्। दोषान् वर्गीकृत्य वर्णयताऽप्यनेन दोषसामान्यलक्षणप्रसङ्गे न किमप्युक्तम्। अत्र तस्य विवेचनसरणीमनुसृत्य तन्मतानुमोदितं दोषस्वरूपं निश्चिनुमः। रुद्रटो वाक्यगुणान् निषेधात्मकपद्धत्या वर्णयति—

**अन्यूनाधिकसुक्रमपुष्टार्थशब्दचारुपदम्।**
**क्षोदक्षममक्षुण्णं सुमतिर्वाक्यं प्रयुञ्जीत॥**[१]

असौ केषाञ्चिद्दोषाणामभावं गुणत्वेनाङ्गीकरोति, यद्धि नाट्यशास्त्रीधारणाया अनुकूलम्। रसौचित्याभ्यां सह दोषाणां सम्बन्धस्थापनं रुद्रटमतवैशिष्ट्यम्। काव्यशास्त्रेऽनौचित्यस्य शब्दतो दोषत्वेनाङ्गीकारः सर्वप्रथमं रुद्रटेनैव कृतः। भामहदण्डिनोर्देशकाललोककलान्यायागमविरोधिषु दोषेषु अनौचित्यस्य स्वीकृतिरप्रत्यक्ष-तयासीत्। भामहेन सामान्यतः, दण्डिना विशेषतश्च दोषाणां नित्यताया अनित्यतायाः प्रतिपादनप्रसङ्गेऽपि औचित्यं दोषनियामकतत्त्वरूपेणाप्रत्यक्षतया स्वीकृतमासीत्। रुद्रटपूर्ववर्तिभिराचार्यैरनौचित्यं दोषत्वेन स्पष्टतो नोक्तं, परं रद्रटेन शब्दार्थगतस्य ग्राम्यत्वदोषस्य बीजरूपेणानौचित्यं प्रतिष्ठापितमितीदमस्य वैशिष्ट्यम्। तथा चोक्तम्—

**यदनुचितं यत्र पदं तत्तयैवोपजायते ग्राम्यम्।**
**तद्वक्तृवस्तुविषयं विभिद्यमानं द्विधा भवति॥**
**पदमिदमनुचितमपरं सम्यासम्यार्थवाचिसम्योऽर्थः**
**अन्यत्रैतेऽचिता शब्दार्थत्वे समानेऽपि॥**[२]

रुद्रटस्वीकृतोऽर्थगतो ग्राम्यत्वदोषोऽपि व्यवहाराकारवेशवचनानां देशकुलजातिविद्यावित्तवयः स्थानपात्राणामनौचित्येन भवति। उक्तञ्च—

**ग्राम्यत्वमनौचित्यं व्यवहाराकारवेशवचनाम्।**
**देशकुलजातिविद्यावित्तवयः स्थानपात्रेषु॥**[३]

'विरस'नामको रुद्रटस्वीकृतोदोषऽर्थदोषेषु परिगणितोऽपि वस्तुतो रस दोष एवास्ति, यो हि रसानौचित्यरूपः। विरसदोषसम्बन्धे रुद्रटः कथयति—

---

१. काव्यालङ्कारसूत्रम्, (रुद्रटः) २.८
२. काव्यालङ्कारसूत्रम्, (रुद्रटः) ६.१७,२१,२६
३. काव्यालङ्कारसूत्रम्, (रुद्रटः) ११.९

**अन्यस्य यः प्रसङ्गे रसस्य निपतेद्रसः क्रमापेतः।**
**विरसोऽसौ स च वाक्यः सम्यज्ज्ञातुं प्रबन्धेभ्यः॥**[४]

यमकालङ्कारविवेचनेऽलङ्कारानौचित्यस्यापि रुद्रटेन सङ्केतो विहितः। तथाचोक्तम्—

**इति यमकशेषं सम्यगालोचयद्भिः।**
**सुकविभिरभियुक्तैर्वस्तु चौचित्यविद्भः॥१**

एवमनौचित्यस्य विविधैः प्रकारैः परिचितोऽपि रुद्रटाचार्यस्तमनौचित्यं दोषसामान्यरूपेणास्वीकृत्य केवलं द्वित्राणामेव दोषाणां बीजत्वेनाङ्गीकृतवान्।

आनन्दवर्धनाचार्योध्वनिप्रतिष्ठापनाचार्यः। काव्यशास्त्र एतत्पूर्वं काव्यस्य स्थूलतत्त्वं शब्दार्थ-शरीरमेवाधृत्य प्राचीनैराचार्यैर्विचारितम्। अतस्स्वाभाविकं यद्दोषसम्बन्धिनो विचारा अपि शब्दार्थयोराधारेणैव प्रवर्तिताः भवेयुः। दोषाः काव्यसौन्दर्यस्य विघातका इत्युद्घोषो वामनेनैव कृतः, किन्तु तन्मते काव्यसौन्दर्यस्याभिप्रायो वस्तुगतत्वेनासीन्नात्मगतत्वेन। दोषसम्बन्धिविचारणायाः सम्बन्धे रुद्रटाचार्येणौचित्यरसयोश्चर्चा तु कृता परमलङ्कारात्मवादिनि युगे व्यापकतां नैवाप्ता तयोश्चर्चा। औचित्यरसयोः सम्बन्धं कतिपयैर्दोषैः सह सन्दर्श्यशब्दार्थदोषयोरेवानयोरन्तर्भावो विहितस्तेन। आनन्दवर्धनः खलु काव्यात्मतत्त्वरूपेण ध्वनितत्त्वं स्थापितवान्—**काव्यस्यात्मध्वनिरिति**[१], तत्रापि **काव्यस्यात्मा स एवार्थस्तथा चादिकवेः पुराः**[३] इत्यादिना प्रतीयमानस्य रसस्य प्राधान्यमङ्गीकृतम् **प्रतीयमान् पुनरन्यदेव**[४] परिणामतो दोषसम्बन्धिनो विचारा अपि प्रतीयमानं रसमात्मनिष्ठ सौन्दर्यञ्चादाय प्रुदुरभूवन्—

**व्यङ्ग्यव्यञ्जकभावेऽस्मिन्विविधे सम्भवत्यपि।**
**रसादिमय एकस्मिन् कविः स्यादवधानवान्॥**[५]

आनन्देन दोषत्वविचारो रसध्वनिदृष्ट्यैव कृतः। तत्रैव दोषाणां नित्यानित्यत्वविभागोऽपि समजनि। ध्वनिकारेण श्रुतिदुष्टादीनां दोषाणामनित्यत्वं सम्पादितं यद्विनूत्वंकर्म आसीद्दोषविषये। उक्तञ्चतेन—

---

१. काव्यालङ्कार, (रुद्रटः) ११.१८
२. काव्यालङ्कार, (वामनः) ३.५९
३. ध्यवन्यालोकः (आनन्दवर्धनः) १.१ (काव्यमाला)
४. ध्यवन्यालोकः (आनन्दवर्धनः) १.५ (काव्यमाला)
५. ध्यवन्यालोकः (आनन्दवर्धनः) १.४ (काव्यमाला)
६. ध्यवन्यालोकः (आनन्दवर्धनः) ४.५ (काव्यमाला)

**श्रुतिदुष्टादयो दोषा अनित्या ये च दर्शिताः।**
**ध्वन्यात्मन्येव शृङ्गारे ते हेया इत्युदाहृताः॥**[१]

वृत्तावपि लिखितम्—**अनित्या दोषाश्च ये श्रुतिदुष्टादयः सूचितास्तेवाच्ये अर्थमात्रे न च व्यङ्ग्ये शृङ्गारव्यतिरेकिणि, शृङ्गारे वा ध्वनेरात्मभूते। किन्तर्हि, ध्वन्यात्मन्येव शृङ्गारेऽङ्गितया व्यङ्ग्ये ते हेयाः उत्युदाहृताः। अन्यथा हि तेषामनित्यदोषतैव न स्यात्।**[२] एवं पूर्वाचार्यैर्वर्णितस्य दोषस्यानित्यताया इयमभिनवा मौलिकी च व्याख्या आसीद्या हि प्रतीयमानस्य रसस्य भङ्गरूपासीत्। रसभङ्गरूपस्यास्य काव्यदोषस्य मूलमनौचित्यमेवेत्यसौ स्वीकरोति। उक्तञ्च—

**अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम्।**
**औचित्योपनिबन्धस्तु रसस्योपनिषत्परा॥**[३]

यद्यप्यौचित्यतत्त्वस्य सुप्रतिष्ठा क्षेमेन्द्रेण कृता, तत्कृता यौचित्यविचारचर्याऽलङ्कारशास्त्रे प्रसिद्धिङ्गता तथाप्येतस्यौचित्यस्योल्लासः प्राचीनाचार्येभ्य एव समुद्भूतः। नाट्यशास्त्रे लोकस्य नाट्यप्रमाणत्वे आहार्याभिनये चौचित्यं मुख्यतयाङ्गीकृतम्—

**नानाशीलाः प्रकृतयः शीले नाट्यं प्रतिष्ठितम्।**
**तस्माल्लोकप्रमाणं हि कर्तव्यं नाट्ययोक्तृभिः॥**
**अदोशयुक्तो वेशो हि न शोभां जनयिष्यति।**
**मेखलोरसि बद्धा तु हास्यं समुपपादयेत्॥**[४]

भामहदण्डिभ्यामपि देशकालकलालोकागमविरोधित्वमनौचित्यमूलकमेव स्वीकृतम्, किन्तु तत्रापि अनौचित्यस्योल्लेखः स्पष्टतया नास्ति। एवं सति सर्वप्रथममानन्दवर्धन एवानौचित्यं रसभङ्गस्य मूलकारण-त्वेनोद्घाटयन् दोषाणां मूलाधारतया तदनौचित्यं व्यवस्थापितवान्।

कुन्तकाचार्यविरचितं वक्रोक्तिजीवितमलङ्कारशास्त्रे स्वीयां स्वतन्त्रामेव पद्धतिमाश्रयते। पूर्वाचार्ये-भ्योऽतिरिक्ता दोषावधारणा कुन्तकस्य। अयं हि शब्दार्थयोर्विशिष्टं लक्षणमुपस्थापयति, येन दोषस्य पृथक् प्रतिपादनं नार्हति। एवं हि विशिष्टयोश्शब्दार्थयोः काव्यप्रयोगे सति नेयार्थत्वापार्थत्वदोषौ स्वभावत एवापयातः। अत एवायं स्पष्टं निषेधति दोषाणां पृथक् प्रतिपादनं काव्ये—**तदेवंविधं विशिष्टमेव शब्दार्थयोर्लक्षण-**

१. ध्यवन्यालोकः (आनन्दवर्धनः) २.११
२. ध्यवन्यालोकः (आनन्दवर्धनः) २,पृ. १३९
३. ध्यवन्यालोकः (आनन्दवर्धनः) ३-उद्योतवृत्तिः
४. नाट्यशास्त्रम् (भरतमुनिः) काव्यमाला, २६.१९१, २१.७३

**मुपादेयम्। तेन नेयार्थापार्थादयो दूरोत्सारित्तत्त्वात्पृथङ्न वक्तव्याः**[१]**।** असौ स्वीकरोति न हि शब्दस्य कश्चिदन्यशब्दः पर्यायो भवितुमर्हति। काव्ये शब्दार्थयोर्विशिष्टत्वं प्रतिपादयताऽनेनोच्यते—अन्येषु सत्स्वपि पर्यायेषु विवक्षितार्थप्रतीतिरेकस्मादेव शब्दाद्भवति—**शब्दो हि विवक्षितार्थैकवाचकोऽन्येषु सत्स्वपि।**[२] अत एव वाचकशब्दलक्षणं करोति—**कविविवक्षितविशेषाभिधानक्षमत्वमेव वाचकत्व-लक्षणम्।**[३] वाच्यञ्च काव्ये सहृदयहृदयाह्लादकारी स्वभावसुन्दरोऽर्थविशेषो भवति—'**अर्थः सहृदयाह्लादकारी स्वस्पन्दसुन्दरः।**[४]' एवं कुन्तकाचार्याभिमतयोर्विशिष्ट्योश्शब्दार्थयोः काव्ये प्रयोगश्चेद्दोषलेशोऽपि न सम्भाव्येत। एवं यत्र काव्ये विशिष्टयोश्शब्दार्थयोः प्रयोगो न भवति तत्र काव्यत्वमेव खण्ड्यते, सत्यपि कथञ्चित्काव्यत्वे तत्रोत्तमकाव्यता नापाद्यते। कुन्तकप्रतिपादिता काव्यमूल्याङ्कनपद्धतिरुत्तमा सूक्ष्मा चेति वक्तुमुत्सहे। तादृशीनां पद्धतीनां निर्वाहाभावः कदाचित् कालिदासराजशेखरादिष्वपि लभ्यते। पदे-पदे आलोचितञ्च कुन्तकेन। एवं विधा पङ्क्त्यः काव्यत्वमादधाना अपि उत्तम काव्यत्वशून्याः दूषितकाव्यरूपा वा भवन्ति। वक्रोक्तिजीविते यद्यपि दोषस्वरूपं तस्य विभागो वा न वर्णितस्तथापि यत्र यत्र शोभाहानिः, तद्विदाह्लादकारित्वहानिः, शोभापरिहारकारिता वेत्यादीनां पदानां प्रयोगस्तत्र तत्र कुन्तकस्य दोषसम्बन्धिविचार एव स्वीकर्तव्यः। एकत्र 'शोभाहानिं दोषस्याभिप्रायोद्घाटनेऽसमर्थानां विशेषणानां प्रयोगं स्वीकरोति। उक्तञ्च—'**विशेषाभिधानकांक्षिणः पुनः पदार्थस्वरूपस्य तत्प्रतिपादनपरविशेषणशून्यतया शोभाहानिरुत्पद्यते**[१]**।**' विषयेऽस्मिन्नुदाहरति चेदं पद्यम्—

**यत्रानुल्लिखितार्थमेव निखिलं निर्माणमेतद्विधे-**
**रुत्कर्षप्रतियोगिकल्पनमपि न्यक्कारकोटिः परा।**
**याताः प्राणभृतां मनोरथगतीरुल्लङ्घ्य यत् संपद-**
**तस्याभासमणीकृताश्मसु मणेरश्मत्वमेवोचितम्॥**[२]

इदमेव पद्यं मम्मट्टोपाध्यायो दोषोल्लासे सनियमपरिवृतत्त्वदोषस्योदाहरणरूपेणोल्लिखति।[३] एतेन कुन्तकस्य दोषोद्घाटनप्रयासः सुस्पष्ट एव प्रतिभाति। कुन्तक औचित्यविरहनामकं दोष स्वग्रन्थे

---

१. वक्रोक्तिजीवितम् (कुन्तकः) प्रथमोन्मेषः पृ. ५०
२. वक्रोक्तिजीवितम् (कुन्तकः) प्रथमोन्मेषः पृ. ३८
३. वक्रोक्तिजीवितम् (कुन्तकः) प्रथमोन्मेषः पृ. ४१
४. वक्रोक्तिजीवितम् (कुन्तकः) प्रथमोन्मेषः पृ. ४९,३८
५. वक्रोक्तिजीवितम् (कुन्तकः) प्रथमोन्मेषः पृ. ४२
६. वक्रोक्तिजीवितम् (कुन्तकः) प्रथमोन्मेषः पृ. ४३
७. काव्यप्रकाश (मूलमात्रम्) पृ. ८३ सप्तम उल्लासः

'तद्विदाह्लादकारित्वहानिः' पदेन व्याख्याति—'**उचिताभिधानजीवितत्वाद्वाक्यस्याप्येकदेशेऽप्यौचित्यविरहात्तद्विदाह्लादकारित्वहानिः।**[1]' अत्रोदाहरणे रघुवंशीयं पद्यं प्रस्तौति—

**पुरं निषादाधिपतेस्तदेतत् यस्मिन्मया मौलिमणिं विहाय।**
**जटासु बद्धास्वरुदत् सुमन्त्रः कैकेयि कामाः फलितास्तवेति॥**[2]

इदं पद्यं पुष्पकविमानेन सीतया सहायोध्यामागच्छतो मार्गे निषादराजनगरीमवलोकयते रामस्य सीताम्प्रत्युक्तिरूपम्। अत्रोदारप्रकृतेः रामस्य कैकेयिव्यवहारतुच्छत्वस्मरणमनौचित्यम्। दोषविषये कुन्तकस्यैकाऽपरापि नवीनोद्भवना। अयमाह—प्रबन्धस्यैकस्मिन् प्रकरणेऽपि औचित्यस्याभावात् सम्पूर्णमपि काव्यं तथैव दूष्यति यथा पटान्ते दग्धे सम्पूर्णोऽपि पटः। तथा चोक्तम्—**प्रबन्धस्यापि कस्यचित्प्रकरणैकदेशेऽप्यौचित्यविरहादेकदेशदाहदूषितदग्धपटप्रायता प्रसज्यते।**[3] शोभापरिहारकारिता पदेनापि कुन्तकस्य दोषविशेषः कीर्त्यते। रसपरिपोषाय विभावादीनामौचित्येन प्रयोगोऽत्यावश्यकः। तदभावे रसपरिपाको न जायते।। उक्तञ्च—**रसपरिपोषपेशलायाः प्रतीतेर्विभावानुभावव्यभिचार्यौचित्यव्यतिरेकेण प्रकारान्तरेण प्रतिपत्तिः प्रस्तुतशोभापरिहारकारिताभावहति।**[4] एवमाचार्यकुतकोऽत्यन्तं सूक्ष्मतया त्रिभिः शोभाहानिः तद्विदाह्लादकारित्वहानिः औचित्यविरहपदैः क्रमेण प्रथमस्थले शब्दगतौचित्यं द्वितीयस्थलेऽर्थगतौचित्यं तृतीयस्थले रसगतौचित्यञ्च सङ्केतयति। अत्राप्यनौचित्यमेव शोभाहानेर्मूलत्वेन निर्दिष्टमिति ध्वनिकारमतपरिपोषिकेयं परिकल्पना प्रतीयते।

अलङ्कारविषयेऽभिनवगुप्तस्य नास्ति कश्चन स्वतन्त्रो ग्रन्थः परं नाट्यशास्त्रस्याभिनवभारती, ध्वन्यालोकस्य लोचनमिति नाम्नी द्वे टीके प्रायेण मूलग्रन्थादप्यधिके महत्त्वपूर्णे विद्येते। रसध्वनि-दृष्ट्या दोषस्यानित्यतायाः सरणिरानन्दवर्धनेनाश्रिता, अभिनवगुप्तेन लोचनटीकायां सैव परिपोषिता। श्रुतिदुष्टादयो दोषाः शृङ्गारादौ दुष्टा अपि वीररौद्रादावदुष्टा इति ध्वनिकारोक्तं मतं लोचने सम्यक्तया समर्थितम्। तथाहि—**न त्वेषां विषयविभागप्रदर्शनेनानित्यत्वं भिन्नवृतादिदोषेभ्यो विविक्तं प्रदर्शितम्। नापिगुणेभ्यो व्यतिरिक्तं दोषत्वम्। बीभत्सहास्यरौद्रादौ त्वेषामस्माभिरुपगमात् शृङ्गारादौ च वर्जनादित्यनित्यत्वसमर्थितमेवेति भावः।**[5] अभिनवभारत्यामपि नित्यानित्यतयानेन दोषो विभक्तः—**एतन्मध्ये तु केचिन्नित्यदोषाः यथा**

---

१. वक्रोक्तिजीवितम् (कुन्तकः) प्रथमोन्मेषः पृ. १६३
२. वक्रोक्तिजीवितम् (कुन्तकः) प्रथमोन्मेषः पृ. १६४
३. वक्रोक्तिजीवितम् (कुन्तकः) प्रथमोन्मेषः पृ. १९४
४. वक्रोक्तिजीवितम् (कुन्तकः) पृ. २९९
५. ध्वन्यालोकस्य लोचनटीका (अभिनवगुप्तः) पृ. ८३ (काव्यमाला)

**अपशब्दः, केचिदनित्या यथा ग्राम्यं, हास्यादौ तस्येष्टतमत्वात्।**[१] एवमानन्दवर्धनोक्त-दोषमान्यतायाः परिपोषकोऽभिनवगुप्ताचार्योऽपीति ब्रूमहे।

महिमभट्टो ध्वनि विरोधीआचार्य इति सर्वविदितमेवैतत्। तथापि दोषसम्बन्धिन्यवधारणायाम-यमानन्दस्यैवानुगन्तेति वक्तुं शक्यम् यथाऽऽनन्दवर्धनो रसभङ्गेऽनौचित्यं मुख्यकारणत्वेनाङ्गीकरोति तथैवायमपि। तथा हि—**अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम्।**[२] महिमानुसारेणानौचित्यं दोषपर्यायः। विवक्षितरसादि-प्रतीतौ विघ्नविघातकत्वमेवानौचित्यपि स्वीकरोति—**एतस्य च विवक्षित रसादिप्रतीतिविघ्नविघातकत्वं नाम (दोष)सामान्यलक्षणम्।**[३] इदमेवास्य दोषसामान्यलक्षणमिति वक्तुं शक्यम्। इदमनौचित्यमर्थस्यासामञ्जस्येनोद्भवति—**ततश्चार्थासामञ्जस्यादनौचित्यं प्रसज्यते।**[४] बहिरङ्गान्त-रङ्गभेदाभ्यामिदं द्विविधम्—**बहिरङ्गान्तरङ्गत्वमेतद् द्विविधंमतम्।**[५] एवं प्रथमं शब्दगतमनौचित्यम्, द्वितीयमर्थगतमन चित्यम्—**तत्र शब्दैकविषयं बहिरङ्गं प्रचक्षते, द्वितीयमर्थविषयन्तत्।**[६] रसभङ्गहेतुषु द्वितीयमर्थगतमनौचित्यमेव मनुते, परन्त्वत्र तस्य विस्तरेणोल्लेखो न कृतः, अन्यत्रास्य बहुभिर्व्याख्यातत्वात्—**........तत्त्वाद्यैरेव प्रदर्शितं तत्स्वरूपमतोऽस्माभिरिह नातिप्रतन्यते**[७]। अत्राद्यपदेनानन्दवर्धनमेव सङ्केतयति। प्रथमं शब्दगतमनौचित्यं पञ्चा सु भेदेषु विभक्तम्। यथा—

**यत्त्वेतच्छब्दविषयं बहुधा परिदृश्यते।**
**तस्य प्रक्रमभेदाद्याः दोषाः पञ्चैव योनयः॥**[८]

अतो महिमभट्टानुसारेणापि अनौचित्यमेव दूषकताबीजम्। आनन्दमहिमयोः केवलमयमेव भेदो यदानन्दो रसस्य ध्वन्यात्मकतां स्वीकरोति तदनुसारेण च रसान् विचारयति। महिमाचार्यो व्यञ्जनाविरोत्वित्तद्दूष-यति ध्वनिञ्चानुमानेनैव गतार्थयति। रसदोषोऽर्थगत एवेति महिमभट्टस्य विचारः। सोऽप्यनुकूल एवेति मन्ये।

भोजराजस्य द्वौ काव्यशास्त्रीयौ ग्रन्थौ प्रसिद्धौ–सरस्वतीकण्ठाभरणं शृङ्गारप्रकाशश्चेति। परमुभयत्रापि दोषसामान्यलक्षणं नोक्तम्। केवलं दोषविशेषहेयतायाश्चर्चा सरस्वतीकण्ठाभरणे कृता। उक्तञ्च—

---

१. नाट्यशास्त्रस्याभिनवभारतीटीका (अभिनवगुप्तः) पृ, ३३३
२. व्यक्तिविवेकः (महिमभट्टः) प्रथमो विमर्शः, पृ. १३३
३. व्यक्तिविवेकः (महिमभट्टः) प्रथमो विमर्शः, पृ. १५२
४. व्यक्तिविवेकः (महिमभट्टः) प्रथमो विमर्शः, पृ. १३५
५. व्यक्तिविवेकः (महिमभट्टः) प्रथमो विमर्शः, पृ. १३५
६. व्यक्तिविवेकः (महिमभट्टः) प्रथमो विमर्शः, पृ. १३५
७. व्यक्तिविवेकः (महिमभट्टः) प्रथमो विमर्शः, पृ. १३५
८. व्यक्तिविवेकः (महिमभट्टः) प्रथमो विमर्शः, पृ. १३५

**दोषाः पदानां वाक्यानां वाक्यार्थानाञ्च षोडश।**
**हेयाः काव्ये कवीन्द्रैर्यैः तानेवादौ प्रचक्ष्महे॥**[१]

तट्टीकाकारो रत्नेश्वरः हेयाः इति पदमेव भोजराजस्य दोषसामान्यलक्षणमङ्गीकरोति। द्रष्टव्यन्तत्— **हेयाः इत्यनेन सामान्यलक्षणम्।**[२] शृङ्गारप्रकाशेऽपि दोषहानमित्यस्य स्पष्टीकरणप्रसङ्गे भोजस्य दोषसम्बन्धिन्यवधारणा प्रायेण सुस्पष्टा भवति। असौ ब्रूते—**तत्र दोषहानमनौचित्यमनौचित्यपरिहारेण।**[३] विशिष्टदोषविचारप्रकरणेऽपि भोजोऽनौचित्यमेव दोषस्य मूलत्वेन स्वीकरोति। तथा च—

**युक्त्यौचित्यप्रतिज्ञादिः कृतो यस्त्विह कश्चन।**
**अनुमानविरोधः स कविमुख्यैर्निगद्यते॥**[४]

एवमेभिर्विवेचनैः सिद्ध्यति यद्भोजराजोऽपि अनौचित्यमेव दोषत्वेन गृह्णाति, यद्धि पूर्वपरम्पराप्राप्त-मानन्दमहिमभट्टादीनामनौचित्यसिद्धान्तमेव परिपुष्णाति।

मम्मटाचार्यः काव्यशास्त्रीयपरम्परायां सुमेरुः। वाग्देवतावतारविरुदविभूषितः सर्वजनसमादृतश्चेति। काव्यप्रकाशे दोषव्यवस्थापनमस्यातीवमहत्त्वपूर्णम्। तत्र **मुख्यार्थहतिर्दोषः**[५] इति दोषसामान्यलक्षणं करोति। तत्र मुख्यार्थः कः? **हतिश्च** का इति जिज्ञासायामेवं समादधति—**रसश्च मुख्यः**[६] **? हतिरपकर्षः।**[७] एवं मुख्यार्थस्य रसस्य यस्माच्छब्दप्रयोगाद्धतिभवत्यसौ दोषपदार्थः। विषयेऽस्मिन्मम्मटाचार्यो रसस्याश्रयत्वेन वाच्यार्थं गृह्णाति, तदाश्रयभूतं शब्दादिकञ्च मनुते। तत्रादिपदेन वर्णरचने गृह्येते। अतो दोषो न केवलं रसमपकर्षति, अपितु तदाश्रयभूतं वाच्यार्थमुभयोरुपायभूतं शब्दं तदङ्गभूते वर्णरचने अपि दुष्टे भवत इति सङ्केतयति। अनेनैवाभिप्रायेणाचार्यो दोषाणां भेदं पद-वाक्य-अर्थ-रसादिगतत्वेन करोति। एतत्सर्वं सन्निहितमेकस्यामेव-कारिकायामाचार्येण—

**मुख्यार्थहतिर्दोषः रसश्च मुख्यस्तदाश्रयाद्वाच्यः।**
**उभयोपयोगिनः स्युः शब्दाद्यास्तेन तेष्वपि सः॥**[८]

---

१. सरस्वतीकण्ठाभरणम् (भोजराजः) प्रथमः परिच्छेदः, पृ. ४३
२. सरस्वतीकण्ठाभरणस्य रत्नेश्वरकृतटीका, पृ. ३
३. शृङ्गारप्रकाशः (भोजराजः) खण्डः २, अ. ११, पृ. ४१०कुत्रचित् अनौचित्यस्य द्विरुक्तिः मन्ये पाठदोषः।
४. सरस्वतीकण्ठाभरणम् (भोजराजः) प्र. प. पृ. ४५
५. काव्यप्रकाशः (मम्मटः) ७ उल्लासः
६. काव्यप्रकाशः (मम्मटः) ७ उल्लासः
७. काव्यप्रकाशः (मम्मटः) ७ उल्लासः
८. काव्यप्रकाशः (मम्मटः) ७ उल्लासः

अत्र मम्मटस्य दोषलक्षणेऽस्मिन्नानन्दाभिनवगुप्तयोर्मतस्य समाहारोऽस्ति। आभ्यां रसध्वनिदृशा दोषविचारो विहितः। दोषस्य नित्यानित्यतायाः आधारोऽपि रस एव। काव्यप्रकाशेऽपि अनेनैवाभिप्रायेण—**मुख्यार्थहतिर्दोष** इति दोषसामान्यलक्षणं विहितम्।

अग्निपुराणे सभ्यानां मनसि उद्वेगजनको दोष इत्यभ्यधायिकिन्त्वयं नूतनो विचारो नास्ति। उक्तञ्च—**उद्वेगजनको दोषः सभ्यानां स च सप्तधा।**[१] विष्णुधर्मोत्तरपुराणे, दण्डिनः काव्यादर्शे चेदमादावेवोल्लिखितम्—**उद्वेजनीयं तु सतां तदुक्तमश्लीलबन्धं सुखदं न काव्यम्**[२]**।** पुराणे, **न लिङ्गवचने भिन्ने**[३]त्यादि काव्यादर्शे।

हेमचन्द्रो रसस्योत्कर्षहेतून् गुणत्वेन, अपकर्षहेतुश्च च दोषत्वेन गृह्णाति। शब्दस्योत्कर्षापकर्षहेतू गुणदोषाविति भक्त्या तेन स्वीकृतौ। उक्तञ्च—**रसस्योत्कर्षहेतू गुणदोषौ भक्त्या शब्दार्थयोः**[४]**।** जयदेवश्चन्द्रा-लोकविधाता। स्वाभाविकः कविरसौ। काव्यदोषविषयेऽयं सहृदयानेव प्रमाणत्वेनाङ्गीकरोति। तथा च ब्रूते हृदये प्रवेशमात्रेणैव येन पदेनार्थेन च काव्यस्य रमणीयता क्षीयतेऽसौ दोषः। द्रष्टव्या चेयं कारिका—

**स्याच्चेतो विशता येन सक्षता रमणीयता।**
**शब्देऽर्थे च कृतोन्मेषं दोषमुद्घोषयन्ति तम्॥**

अलङ्कारवादी ह्यमचार्यो दोषस्य सौन्दर्यविघातकत्वमेवाङ्गी करोति न तु रसापकर्षकत्वम्। रसदोषयोर्मिथः सम्बन्धोप्यनेनेन वार्यते, न वा रस दोषा अपि प्रतिदोषा अपि प्रतिपादिता। अतो काव्यसौन्दर्यविघातकत्वं दोषत्वमित्येव दोषसामान्यलक्षणमेतन्मतेन सिद्ध्यति। प्रमाणञ्चात्र सहृदयानुभवः इति सकलैतन्मतनिष्कर्षः। विद्यानाथेन काव्यस्यापकर्षहेतवो दोषा इत्युक्तम्। तथा हि—**दोषः काव्यस्यापकर्षहेतुः शब्दार्थगोचरः।**[५] जयदेववदयमपि दोषस्य शब्दार्थाभ्यामेव सम्बन्धं स्वीकरोति, न हि रसेन। अनेन स्वीये दोषलक्षणे मम्मटस्योत्कर्षपदन्तु गृहीतं परं रसपदं न गृहीतम्। विश्वनाथस्तु स्वीये साहित्यदर्पणे **रसापकर्षका दोषा**[६] इति दोषसामान्यलक्षणं करोति। एतन्मतानुसारेण दोषाः साक्षाद्रससम्बद्धाः। अत एव वाक्यं रसात्मकं काव्यमित्यस्य काव्यलक्षणम्, किञ्च शब्दार्थगताः दोषा अपि रसापकर्षत्वेनैव गृहीताः यथा। शरीरे काणत्वखञ्जतादयो दोषाः दूषयन्तस्तच्छरीरे विद्यमानमात्मानमपि दूषयन्ति तथैव शब्दार्थौ

१. अग्निपुराणम् की भूमिका से उद्धृत पृ, ३
२. विष्णुधर्मोत्तरपुराणम्, खण्ड ३, १५-१५
३. काव्यादर्श (दण्डी) २.५१
४. काव्यानुशासन, (हेमचन्द्रः) १.१२, पृ. ३४
५. प्रतामरुद्रयशोभूषण (विद्यानाथ) पृ. २९६ (१९०९ ई.स. त्रिवेदी)
६. साहित्यदर्पण (विश्वनाथ) ७ परिच्छेद पृ, ३२७

दूषयन्तो दोषाः काव्यात्मभूतं रसमपि दूषयन्तीत्यस्याभिप्रायः। उक्तञ्च—**श्रुतिदुष्टापुष्टार्थत्वादयः काणत्वखञ्जत्वादय इव शब्दार्थद्वारेण देहद्वारेणेव व्यभिचारिभावादेः स्व शब्दवाच्यत्वादयो मूर्तत्वादय इव साक्षात्काव्यात्मभूतं रसमपकर्षयन्तः काव्यापकर्षका इत्युच्यन्ते।**[1]

काव्यप्रकाशटीकाकारो गोविन्दठक्कुरः काव्यप्रदीपे माम्मटं दोषलक्षणं परिष्करोति—यदि हतिः पदार्थोऽपकर्षः स्यात्तदा रसानुत्पत्तिप्रयोजकेषु दोषेष्वतिव्याप्तिः, यदि चानुत्पत्तिरित्यर्थो गृह्येत तदा यत्रापकृष्टरूपेण रसोत्पत्तिस्तत्राव्याप्तिः। एवमिदं मम्मटोक्तं दोषसामान्यलक्षणं दरिद्रदम्पत्योः प्रावारकं वस्त्रमिव साकल्येनामूलं दोषप्रयोजकान् लक्षयितुं न सुशकम्। अतो व्याख्याति–रसात्मककाव्ये उद्देश्यप्रतीतिश्चाविलम्बेनापकृष्टतया रसप्रतीतिः। नीरसकाव्ये उद्देश्यप्रतीतिश्चाविलम्बेन चमत्कारितयार्थप्रतीतिः। एव दुष्टकाव्ये सति सरसे नीरसेऽपि वा उद्देश्यप्रतीतिः सामान्यं तत्त्वमस्ति। दुष्टकाव्ये कुत्रचित् रसस्याप्रतीतिः कुत्रचित् प्रतीयमानस्य रसस्यापकर्षः। कुत्रचिच्च तस्य विलन्बेन प्रतीतिः। तदेतत् सर्वमुद्देश्यप्रतीतिविघातरूपमेव। तथा चोक्तं विस्तरेण काव्यप्रदीपे—**.....हति शब्दस्यापकर्षवाचित्वात्। नन्वेवं रसानुत्पत्तिप्रयोजकेष्वतिव्याप्तिः। अर्थानुत्पत्तिरेवेति हतिशब्दार्थः। तर्हि यत्र रस उत्पद्यते एवं परन्त्वकृष्यते तत्राव्याप्तिः। तदेतल्लक्षणमतिदरिद्रदम्पत्योः कृशतरनिशावगुण्ठनीयवसनमिवैकेनापकृष्यमाणमपरं परिहरति।.......हतिरपकर्षः, अपकर्षत्व-ञ्चोद्देश्यप्रतीतिविघातकत्वम्। उद्देश्यप्रतीतिविघातलक्षणोऽपकर्षो हतिशब्दार्थः।.....उद्देश्या च प्रतीतिः रसवत्यविलम्बितानापकृष्टत्वं सर्वेषामविशिष्टम्। यतो दुष्टेषु क्वचिद्रसस्याप्रतीतिरेव क्वचिद्विलम्बेन प्रतीतिः क्वचिदचमत्कारितेत्यनुभवसिद्धम्।**[2]

उद्देश्यप्रतीति विघातकत्वञ्च द्विधा—साक्षात्परम्परया चेति। तत्र रसदोषाः साक्षाद्विघातकाः शब्दार्थ-निष्ठाश्च पारम्पार्येण। तत्राप्यसमर्थत्वादयोऽर्थोपस्थितौ अभावरूपतया विघ्नन्ति, निहतार्थादयो विलम्बेनार्थप्रतीत्या, च्युतसंस्कृत्यादयश्च वाक्यार्थबोधाभावरूपेण, क्लिष्टत्वादयो वाक्यार्थबोधे विलम्बेनेत्येतत्सर्वं विस्तरेणोक्तं टीकाकारेण—**तद्विघातकता च कस्यचित्साक्षाद्यथा रसदोषाणाम्, कस्यचित्परम्परया यथा शब्दार्थदोषाणाम्, तेष्वपि कस्यचिदर्थोपस्थितेरभावाद्यथा समर्थत्वादेः कस्यचिद्विलम्बात् यथा निहतार्थत्वादेः, कस्यचिद्वाक्यार्थबोधाभावात् यथा च्युतसंस्कृत्यादेः। कस्यचिद्विरोध्युपस्थापनेन, विपरीतोपस्थापनेन वा यथा विरुद्धमतिकृत्वादेरिव्याद्यूहनीयम्। विघातकत्वं कस्यचिज्ज्ञातस्य यथा व्याहतत्वादेः कस्यचित्तु विरूपसत् एव, यथा निहतार्थत्वादेः।** केशवमिश्रेणापि स्वीयेऽलङ्कारशेखरनाम्निग्रन्थे

---

१. साहित्यदर्पण (विश्वनाथ) ७ परिच्छेद पृ. २१

२. काव्यप्रकाशस्य टीका काव्यप्रदीपः (गोविन्दठक्कुरः) पृ. १६९-१७०

रसोत्पत्तिप्रतिबन्धकस्यैव दोषत्वमूरीकृतम्।—**दोषत्वञ्च रसोत्पत्तिप्रतिबन्धकत्वम्**[१]**।** परन्त्वत्र नीरस-काव्यगतदोषत्वस्य विचाराभावादव्याप्तिर्लक्षणदोष इति।

इदानीमामूलं काव्यशास्त्रमालोच्य वक्तु शक्यं यत्काव्यशास्त्रीयावधारणाऽऽचार्येषु स्थूलपक्षतश्शनैः शनैः सूक्ष्मतामुपगता। दोषात्काव्यत्वस्याघातो भवति, गुणदोषयोः परस्परं विपर्ययात्मकः सम्बन्ध इत्यादि रूपावधारणा स्वाभाविकी एवासीत्। काव्यं भवति लोकानुसारि। प्रवर्तते च शास्त्रमपि तथैव। लोके पुनः गुणदोषयोर्युग्मचेतना परस्परं सुखदुःखयोरिव शुभाशुभयोरिव प्रकाशान्धकारयोरिव सहचारिणी भवतीति गुणदोषयोरपि परस्परं विपर्ययत्वेन परिज्ञानं नास्वाभाविकम्। नाट्यशास्त्रादारभ्य रुद्रटस्य काव्यालङ्कारपर्यन्तं गुणदोषयोर्विपर्ययात्मिकी विवेचना प्राचलत्। तदनु दोषस्येमां वस्तुनिष्ठां दृष्टिमतिरिच्यात्मनिष्ठापि विचारधारा प्रचलिताभूत्।

समीक्षकैराचार्यैः सामाजिकानां मनांस्यालोडितानि, यानि दुष्टरचनाप्रभावादाबद्धानीवासन्। दोषो भवत्युद्वेजकं सचेतसां चेतसीति भावकमनोमन्थनस्यैवायं परिणामः। विष्णुधर्मोत्तरपुराणे काव्यादर्शे चोद्वेजकत्वं दोषविशेषरूपमेवासीत् परमिदं क्रमेण दोषसामान्यतया परिणतम्। अत एवाग्निपुराणे **उद्वेजकत्वं दोष**[२] इत्युक्तम्। सम्पूर्णस्यापि विचारस्यालोचनेन विज्ञातं भवति यत् काव्यत्वविचारस्त्रिधा प्राचलत्-प्रथमं शब्दार्थशरीरमाधृत्य वस्तुनिष्ठकाव्यत्वविचारः केवलमत्र शब्दार्थयोरेव विचारोऽभूत्। अतो दोषसम्बन्धीविचारोऽपि शब्दार्थावाधृत्यैव प्राचलत् क्रमोऽयं मन्ये, भरत-भानह-दण्डिप्रभृतिष्वाचार्येष्वासीत्[३]। द्वितीयमात्मत्वविचारः, शब्दार्थशरीरे काव्ये भाषैव जुषते प्राधान्यम्। इयं काव्यभाषा सामान्यभाषाया अतिरिच्यमाणातिशयतां काञ्चिद्बिभर्त्येव इयमपि दृष्टिः स्थूलात्सूक्ष्मविचारोन्मुखी आसीत्, परमासीद्वस्तुनिष्ठैव सा। क्रमेऽस्मिन्काव्यस्यात्मतत्त्व-रूपेणालङ्काररीतिगुणवक्रोक्तिप्रभृतीनां तत्त्वानां प्रतिष्ठाञ्चिकीर्षव आयार्याः सञ्जाताः। अतो दोषत्वविचारोप्येतानि तत्त्वान्याधृत्यैव समजनि। तृतीयञ्च सहृदयानपेक्ष्यात्मत्वविचारः। इयमासीद्वस्तुतो वैज्ञानिकी दृष्टिः। अनया मनः संवेगानुसारेण काव्यात्मनो विचार प्रावर्तत। अतोऽत्र स्थूलतः सूक्ष्मविचारस्यासीच्चरमोत्कर्षः। अत्र प्रथममानन्दवर्धन एव काव्यात्मनः प्रमाता रसध्वनेः। अतोऽस्य दोषविचारोऽपि सहृदयान् प्रतीयमानञ्च परिकल्प्यैव सञ्जातः। स चानौचित्यमूलको रसभङ्गात्मकः। महिमभोजयोर्दोषावधारणानन्दस्य विचारमनुगता। मम्मटोऽपि आनन्दस्य ध्वनिवादं कुक्षौ निक्षिप्यैवाचचक्षे दोषलक्षणम्। तथा च स्वीचकार सरस्य तदुपायभूतयोः शब्दार्थयोर्मुख्यार्थत्वम्। तत्रापि ध्वनिवादे रसवादो बहुमानोऽभूत्। अत एव विश्वनाथो रसं काव्यात्मत्वेनाङ्गीकृत्य

---

१. काव्यप्रकाशस्यटीका काव्यप्रदीपः (गोविन्दठक्कुरः) पृ. १७०
२. अग्निपुराणम् भूमिका, पृ ३
३. सं. काव्यशास्त्र का इतिहास (पी. वी. काणे) प्रथम संस्करण १९६६

रसापकर्षका दोषा इति जुघोष। वाक्यं रसात्मकं काव्यं, दोषास्तस्यापकर्षका इत्यप्यन्यत्रोचे, परमुभयोरैक्यमेव। विद्यानाथोऽपि काव्यापकर्षकत्वेनैव दोषत्वं स्वीचकार। परं विश्वनाथोक्तदोषलक्षणादस्ति कश्चन भेदः नायं रसं काव्यत्वेनाङ्गीकरोति। अलङ्कारात्मवादं स्वीकुर्वता जयदेवेनापि दोषस्य सौन्दर्यविघातकत्वमेव स्वीकृतम्। परमानन्दात्परं दोषत्वविचारणाध्वनितत्त्वमेवाधृत्य प्राधान्येन सञ्जाता इति वक्तुं युक्तम्। एवं सर्वमिदमालोच्य दोषविचारणायां किमस्माभिर्ग्राह्यमिति जिज्ञासायां गुणविपर्ययो दोष इत्युक्ते गुणपदार्थः कः? विपर्ययश्च क इत्याकाक्षा, अथ च भावात्मकवस्तुनो विपर्ययत्वेन व्याख्यानं नातीव रमणीयमथापि निषेधमुखी परिभाषापि न तथावहति मनोमोदम्। सौन्दर्याक्षेपहेतुः सौन्दर्यविघातको वा दोष इत्युक्ते पुनस्तद्वहेव, किं सौन्दर्यं, कश्च तस्य विघात इत्यनेके प्रश्नाः समुद्भवन्ति। तथा चेदं स्थूलशरीरं लक्षणम्। यदि चेत् सहृदयोद्वेजकत्वं दोषत्वमित्युच्येत, तदा दोषस्वरूपस्थितावपि सहृदयत्वसाधने किमपि प्रमापकं न निश्चितम्। अत एवात्रोद्देश्यप्रतीतौ विघातकेषु बहुषु तत्त्वेषु विद्यामानेष्वपि किं मूलमेतेषामिति मीमांसायामनौचित्यमेव परां भूमिकामावहति। किञ्चानौचित्य-मित्याकाङ्क्षायाम्—**उचितस्य योऽभावस्तदौचित्यम्**[1], **उचितं प्राहुराचार्याः सदृशं किल यस्य तत्**[2] इत्याद्याचार्यवचनमेव प्रमाणम्। अन्यैरपीदमौचित्यं व्याख्यातम्। महामहोपाध्यायः कूपूस्वामी काव्यशास्त्रीयं सर्वमपि तत्त्वमौचित्यसन्निविष्टमामनुते। तथा हि—

**औचितीमनुधावन्ति सर्वे ध्वनि रसोन्नयाः।**
**गुणालङ्काररीतीनां नयश्चानृजु वाङ्मयाः॥**[3]

अस्यौचित्यस्य काव्ये यत्रोन्मेषस्तत्र काव्यगुणाः, यत्र च ह्रासस्तत्र काव्यदोषा इति व्याप्तिः स्थीयते। एवं दोषस्य निष्कृष्टमुत्तमञ्च लक्षणमनौचित्यमूलकमुद्देश्यप्रतीतिविघातकत्वं दोषत्वमित्येव दोषलक्षणसर्व-स्वमिति शम्॥

---

१. औचित्यविचारचर्चा (क्षेमेन्द्रः) १.७ का.
२. औचित्यविचारचर्चा (क्षेमेन्द्रः) १.७ का.
३. काव्यदोषों का उद्भव एवं विकास, पृ. ६२

# निरुक्तदृष्ट्या देवतानां प्रयोजनम्

**डॉ० देवेन्द्रप्रसादमिश्रः**

विश्वस्यास्य मायामयो व्यामोहो दुरन्तः। सर्वो हि लोकः मृगमरीचिकामयपदप्रतिष्ठा-धिकारैश्वर्यानुगामी केवलमशान्तिमूलकानां दुरितानामेव संग्रहासक्तो दृश्यते। यत्र तत्र भ्रमतां पक्षिणां यथा भूमिरेव विश्रामस्थानम्, तथैव नानायोनिषु परिभ्रमतामज्ञानिनां जीवानां केवलं करुणावरुणालयो भगवान्नेव विश्रामस्थलम्। परं दुरभ्यस्तजीवस्य सितारसतुल्यो मधुरो ब्रह्मसुखानुभूतिपन्थाः निम्बकीटकस्येवोद्वेजकः प्रतीयते। अतोऽस्य प्रज्ञा सदैव विचलितैवास्ते।[१] अस्यां स्थितौ पितृभ्यामप्यतिशयेन हितकारिणी निष्पक्षनिष्कण्टक मार्गावलोकयित्री भगवती श्रुतिरेव शरण्यास्ति। निरूक्तस्य दैवतकाण्डे देवतत्वविचारः अस्ति। यथा–

**तिस्र एव देवता इति नैरुक्ताः। अग्निः पृथिवीस्थानः वायुर्वेन्द्रो वा अन्तरिक्ष स्थानः। सूर्यो द्युस्थानः।**[२] तिसृणामग्निवायुसूर्याणां ऐश्वर्ययोगात्, एकात्मनामनेकधा विकुर्वन्तीनामेकैकस्याः प्रतिविकारं जातेवदाः, वैश्वानरः, वरुणः रुद्रः, अश्विनौ, उषा इत्येवमादीनि बहूनि नामधेयानि भवन्ति।

वैदिकसाहित्ये पृथिवीस्थानीयदेवतासु अग्नेः प्रमुखं स्थानं विद्यते। शतद्वयेषु सम्पूर्णेषु सूक्तेषु अग्नेः स्तवनं विद्यते। यज्ञप्रधानानां प्रायः सर्वेषां मण्डलानां प्रारम्भिक सूक्तेषु अग्निः सम्बोधितः वर्तते।[३] अग्नेः कर्म हविषां वहनं देवतानाम् आवाहनञ्च। यच्च किञ्चिद् दार्ष्टिविषयकम् अग्निकर्म एव तत् अग्नेः अङ्गंप्रत्यङ्गं पूर्णतः घृतमयम् अस्ति। घृतपृष्ठः, घृतप्रतीकः, घृतकेशः हरितकेशः ज्वाललोमश्च इत्यादीनि नामानि सन्ति। अस्य दन्तपंक्तिः हिरण्यमयी प्रकाशयुक्ता च अस्याभिप्रायः पर्यावरणस्य शोधनम्। अग्निः विविधरूपेण सर्वेषु पदार्थेषु विद्यमानः। यथा– जलेषु, जीवेषु, वनस्पतिषु विविधरूपेण विद्यमानः वर्तते। अतस्तु सामाजिकजीवने अग्नेः प्रयोजनं वर्तते।

**वायुर्वेन्द्रो वा अन्तरिक्षस्थानः।** इन्द्रस्य कर्म रसानुप्रादानं, वृत्रवधश्च। या च का च बलकृतरिन्द्रकर्मैव तत्। ऋग्वेदस्य पञ्चाशदधिकशतद्वयेषु सूक्तेषु अस्य वर्णनं मुख्यतः वर्तते। इन्द्र एव

१. "तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि।" (गीता २.७६)

२. निरुक्तम् - ७,२

३. अग्निमीडे पुरोहितं यज्ञस्य देवमृत्विजम्।
होतारं रत्नधातमम्॥ (ऋग्वेदे १,१)

असुराक्रमेण प्रकम्पमानां पृथिवीं दृढी चकार। अस्य महत्वपूर्णं कार्यं वृत्रवधः, येन लोकजीवनी वृष्टिः स्यात्। इन्द्रस्य साहाय्येन बिना न कोऽपि विजयं लभते। इन्द्रः अचलं सचलं करोति। इन्द्रः विश्वस्य प्रतिरूपः। इन्द्रः देवसेनानां प्रणेता।[१]

अतः हे इन्द्र! अस्मान् उद्गतहर्षान् कुरु। सर्वेषां मनुष्याणां मनांसि च हर्षयुक्तानि कुरु। शीघ्रगमनानि उत्कृष्टानि कुरु। किञ्च युद्धस्थानेषु प्रसरन्तः विजयघोषाः उद्गच्छन्तु रथाः (सशब्दाः प्रसरन्तु)।[२] इन्द्रः सर्वेषु पदार्थेषु च बलरूपेण विद्यमानः अस्ति। एतदर्थेषु सामाजिकजीवने इन्द्रस्य प्रयोजनं वर्तते।

**सूर्यो द्युस्थानः।** द्युस्थानीयदेवानां मध्ये सूर्यस्य (आदित्यस्य) सर्वप्रथमं स्थानं विद्यते। आदित्यस्य कर्म रश्मिभी रसाहरणं, रसधारणं रसदानञ्च, यत् च किञ्चित् प्रह्वलितं तत् आदित्यकर्मैव। सविता देवः (सुवति स्व-स्वव्यापारे प्रेरयतीति सविता) रात्रिलक्षणेन सह पुनर्भ्रमणं कुर्वन् दैवादिकं मनुष्यादिकं च स्वस्वप्रदेशेषु स्थापयन्, भुवनानि पश्यन्, साधु के कुर्वन्ति केऽसाध्विति विचारयन् हिरण्यमयेन रथेन आगच्छति।[३]

जगतां नेत्रभूतमादित्यरूपं पूर्वस्यां दिशि उच्चरति (उदेति)। कीदृशं तत्? देवहितस्य स्थापकम्। तस्य प्रसादात् शतवर्षपर्यन्तं वयमव्याहतचक्षुरिन्द्रिया भवेम। शतं शरदः अपराधीनजीवना भवेम। शतं स्पष्टश्रोत्रेन्द्रिया भवेम। शतं शरदः अस्खलितवागिन्द्रिया भवेम। शतं शरदः कस्याप्यग्रे दैन्यं न कुर्याम्। शतवर्षोपर्यपि बहुकालं पश्येम।[४]

तस्य देवस्य द्योतनात्मकस्य सवितुः प्रेरकस्यान्तर्यामिनो विज्ञानानन्दस्वभावस्य ब्रह्मणो वरणीयं, सर्वसंसारस्य प्रकाशनसमर्थं भरणसमर्थञ्च तेजः सत्यज्ञानानन्दादिरूपं वेदान्तप्रतिपाद्यं वायं ध्यायामः। यः सविता अस्माकं बुद्धीः सत्कर्मानुष्ठानाय प्रकर्षेण प्रेरयति।[५]

**एवं मानवजीनस्य त्रिविधतापनिवारणार्थं पुरुषार्थचतुष्टयस्य प्राप्त्यर्थं च सामाजिकजीवने देवतानां प्रयोजनं वर्तते।**

---

१. इन्द्र आसां नेता बृहस्पतिर्दक्षिणा यज्ञः पुरः एतु सोमः। देवसेनानामभिभञ्जतीना जयन्तीनां मरुतो यन्त्वग्रम्।। शुक्लयजुर्वेदसंहिता - १७, ४०

२. शुक्लयजुर्वेदसंहिता – १७, ४२

३. आ कृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च। हिरण्ययेन सविता रथेना देवो याति भूवनानि पश्यन्।। शुक्लयजुर्वेदसंहिता - ३३, ४३

४. तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत। पश्येम शरदः शतं जीवेम शरदः शतं शृणुयाम शरदः शंत प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतं भूयश्च शरदः शतात्।।

५. तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात्। शुक्लयजुर्वेदसंहिता – ३, ३५

# ज्योतिषशास्त्रे विवाहकालव्यवस्था

**श्री राजेशशर्मा**

विवाहसंस्कारो गर्भाधानादिषोडशसंस्कारेष्वन्यतमः। धर्मार्थकाममोक्षेति पुरुषार्थचतुष्ट्यस्य मूलाधारो गृहस्थाश्रमः। ब्रह्मचर्याश्रमे सम्यागध्ययनं विधाय बालको बालिका वा गृहस्थाश्रमं प्रविशेदिति जगत्कल्याणकारिणी धर्मशास्त्रीया व्यवस्था। जगति कल्याणं तादानीमेव सम्भवेद् यदा जनाः शास्त्रेण शासितास्स्युः। परमद्यत्वे युगधर्मप्रभावात् स्थितिः काचिद् भिन्ना। सर्वे शास्त्रेण न, अपितु शस्त्रेण किं वा राजाऽऽज्ञया शासिताः भवन्ति। अन्यथा स्वच्छन्दमाचरन्ति। परं नायं पक्षः समीचीनः। अनेन केवलं जनेषु अशान्तिः, समाजे अराजकतायाः अभिवृद्धिः विविधरोगोपद्रवादीनामाविर्भावश्च सञ्जायते। यद्यपि ऐतेषां समेषां मूलमज्ञानं तथापि किम्भूतमज्ञानमिति सूक्ष्मधिया विचार्यते चेदित्यस्मिन् प्रश्ने बहुषूत्तरेषु कालविज्ञानस्य ज्ञानाभावात्मकज्ञानमस्माकं दृष्टिपथं समायाति। कालविज्ञानस्य (ज्यौतिषशास्त्रस्य) जनेषु सम्यज्ज्ञानं भवेत् तथा साङ्गेन ज्यौतिषशास्त्रेण जनाः शासितास्स्युस्तदा समाजे विद्यमानास्सर्वा अशान्तयः स्वयमेव अपगताः भविष्यन्ति।

इदानीं प्रकृतप्रसङ्गमाश्रित्य गृहस्थाश्रमाधारस्य विवाहसंस्कारस्य कालनिर्धारणविषयं संक्षेपेण किञ्चिदुच्यते–विवाहशब्दो व्युपसर्गपूर्वकवह्धातोर्घञ्प्रत्यये कृते सिद्ध्यति। वह्धातुः प्रापणार्थे प्रयुज्यते। वरस्य कृते बध्वाः प्राप्तिः, बध्वा कृते वरस्य च प्राप्तिः संस्कारेऽस्मिन् भवति। परमयं महत्वाधायकः संस्कारः सुकाले एवेदन्यथा समग्रो गृहस्थाश्रमः प्रदूषितो भवति। दृश्यतेऽप्यधुना यद्विवाहात् कञ्चित्कालनन्तरमेव वरबध्वोर्मध्ये मतान्तरं, गृहकलहः, सन्तानहानिप्रभृतयो दोषा विवाहविच्छेदमपि जनयन्ति।

विषयेऽस्मिन् सूक्ष्मधिया विचार्यते चेत् वर–वध्वोः जन्मपत्रमेलने दोषः, तथा असमुचिते काले महत्त्वपूर्णसंस्कारस्यास्य सम्पादनमेवात्रबीजम्। सुकाले कृतं कर्म साफल्यन्तथा अकाले कृतं कर्म वैफल्यं यातीति लोकल्याणकरस्य ज्योतिषशास्त्रस्य सर्वजनसम्मतः सिद्धान्तः। अतः विवाहसंस्कारोऽयं सुमुहूर्ते एव सम्पादनीयः। विवाहश्चाष्टविधः प्रोक्तो मनुना–

---

१. मनुस्मृतिः

**ब्राह्मो दैवस्तथा चार्षः प्राजापत्यस्तथाऽऽसुरः।**
**गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमोऽधमः।।[१]**

अत्रोपर्युक्तेषु अष्टसु विवाहेषु प्रथमतश्चत्वारो विवाहाः श्रेष्ठा ऋषिसंज्ञकाश्च वर्तन्ते। एषां कृते समुचितः कालो निर्धारितो विद्यते। अतः एषां विवाहानां सम्पादनम् ऋषिसम्मते काले एव विधेयम्। अन्येषां चर्तुणामसामाजिकसुरगान्धर्वराक्षसपैशाचानां कृते कस्यापि कालस्यापेक्षा नास्ति। यतः कामोपभोगशामका एते विवाहाः सुदूरपरिणमेन अतिशयकष्टकारकास्तथा ऋषिसम्मतविवाहसंस्कार-प्रयोजनपथभ्रष्टास्सन्ति। अतः कामोपभोगशामकाः इमेऽधमविवाहाः यस्मिन् कस्मिन्नपि काले कर्त्तुं शक्यन्ते। परमुत्कृष्टानामृषिसम्मतानां ब्राह्मदेवार्षप्राजापत्यविवाहानां सम्पदानम् ऋषिसम्मतकाले एव करणीयमिति व्यवस्था शास्त्रेषु प्रतिादिता विद्यते।

**विवाहकालनिर्धाणार्थं तत्रादौ विवाहमासव्यवस्था–**विवाहमासनिर्धारणार्थं द्वादशसौरमासेषु मेष–वृष–मिथुन–वृश्चिक–मकर–कुम्भमासा एव शास्त्रसम्मतास्सन्ति। तद्यथा रामदैवज्ञः प्राहः–

**मिथुनकुम्भमृगालिवृषाजगे मिथुनगेऽपि रवौ त्रिलवे शुचेः।**
**आलिमृगाजगते करपीडनं भवति कार्त्तिकपौषमधुष्वपि।।[१]**

अर्थात् मिथुने (आषाढ़े), कुम्भे (फाल्गुने), मृगे (माघे), अलौ (मार्गशीर्षे), वृषे (ज्येष्ठे), अजे (वैशाखे) राशिगते रवौ विवाहः शुभदो भवति। कार्त्तिक–पौष–चैत्रमासेष्वपि यदि क्रमेण वृश्चिक–मकर–मेषराशिगतः सूर्यो भवेत्तदा तत्रापि विवाहो भवितुमर्हति। समग्रे आषाढमासे मिथनस्थे सूये विवाहो न प्रोक्तः। अपितु एकस्य मासस्य तृतीयांशतुल्ये दिवसे अर्थात् ३०.३=१० दिनानि यावत्) आषाढशुक्लप्रतिपदातः दशमीतिथिं यावत् (हरिशयनात्प्राक्) विवाहः शुभदो भवति। तद्यथा–चूडारत्ने–**पौषेऽपि मकरस्थेऽर्के चैत्रे मेषगते रवौ। आषाढे मिथुनादित्ये केप्याहु करपीडनम्।** अत उपर्युक्तेषु मेष–वृष–मिथुन–वृश्चिक–मकर–कुम्भमासेषु विवाहः कल्याणकरो भवति। विवाहकालनिर्धारणप्रसङ्गे कश्यपेनाप्युक्तम्–**उत्तरायणगे सूर्ये मीनं चैत्रञ्चवर्जयेत्। अजगोद्वन्द्वकुम्भालिमृगराशिगते रवौ। मुख्यं करग्रहन्त्वन्यराशिगे न कदाचन**। अत्र ध्यातव्यं यद् येषु प्रदेशेषु सर्वेषु मासेषु विवाहसंस्कारो भवति, तत्र सर्वाधिकः दाम्पत्यकलहः, दाम्पत्यविच्छेदश्च दृश्यते। नक्षत्रविषये प्रतिपादितमस्ति यत्–अश्विनी–रोहिणी–मृगशिरा–मघा–हस्त–चित्रा–स्वाती–अनुराधा–मूल–उत्तरात्रय–श्रवण–धनिष्ठा–रेवतीनक्षत्रेषु विवाहः पुरुषार्थत्रयसाधने महोपयोगी भवति। परमेतानि नक्षत्राणि वेधरहितानि स्युः। अतः उपर्युक्तेषु वेधरहितनक्षत्रेषु वृष–मिथुन–कन्या–तुलादिशुभमुहूर्तेषु रवि–चन्द्र–बुध–गुरु–शुक्रवासरेषु, मृत्युबाण–पञ्चशलाकादिवेध–रहितेषु विवाहप्रकारणोक्तशुभमुहूर्तेषु विवाहः शुभाय मङ्गलाय च भवतीति दिक्।

१. मु. चि. विवाहप्रकरणम् - ६.१३

# ज्योतिषशास्त्रे रोगनिदाने भावादीनां महत्त्वम्

**डॉ. सुभाषचन्द्रमिश्रः**

भारतीयचिन्तनधारायां कर्मणां महत्त्वं सर्वथा दृश्यते। कर्माण्येव कारणानि सन्ति मानवानां शुभाशुभफलनिर्धारणे। ज्योतिषशास्त्रं मुख्यरूपेण कर्मबोधकं शास्त्रमस्ति। भारतीयानां ज्ञानगारा: वेदा: एव सन्ति। वेदस्य मुख्योद्देश्यमस्तीष्टप्राप्तिस्तथा चानिष्टपरिहार:। अस्मिन् विषये सायणाचार्येणोक्तम् यत् "इष्टप्राप्त्यनिष्टपरिहाराय लौकिकमुपायं वेदयतीति यो राशि: स वेद:"। अनिष्ट.निर्धारणं कथं भविष्यतीति प्रमुखप्रश्नोऽस्ति? अनिष्टनिर्धारणन्तु केवलं ज्योतिषशास्त्रादेव भवति। अत: मानवानां कृते वर्तते आवश्यकमिदं शास्त्रम्।

वैदिकदर्शनानुसारमात्मन: नाश: कदापि न भवितुं शक्यते केवलं कर्मानुबन्धनेनायमात्मा निर्विकारी अविनाशी भूत्वाऽपि कर्मानुबन्धस्य प्रभावेण जन्ममृत्युजराव्याधिभि: युक्तो भवति। आत्मानोऽनादिकर्मप्रभावेन लिङ्गकारणभौतिकशरीरै: सह सम्बन्धो भवति। चित्तवृत्तिनिरोधेन समाधिस्थो भूत्वाऽपि कर्मप्रभावो विरमति। सञ्चितकर्मणां शुभाशुभं फलं भुक्त्वैव तेषां क्षयो भवति। शरीरिणा जन्मजन्मान्तरेषु कृतं शुभाशुभकर्माणां परिणामो अस्मिन् जन्मनि कदा? कुत्र? कस्मात्? मिलिष्यतीति व्याख्या केवलं ज्योतिषशास्त्रे एवं मिलति। यथा.वराहेणोक्तम्–

**यदुपचितमन्यजन्मनि शुभाऽशुभं तस्य कर्मण: पक्तिम्।**
**व्यञ्जयति शास्त्रमेतत् तमसि द्रव्याणि दीप इव।।**[१]

महर्षिपराशरानुसारं जन्माङ्गस्य द्वादशराशिभावग्रहयोग ग्रहदशाभिस्तथा च गोचरीय. परिभ्रमणैर्मानवानां विवेचनव्यवस्था होराशास्त्रे व्यवस्थिता वर्तते। जन्माङ्गस्य द्वादशभावेषु राशिषु ग्रहयोगै: ग्रहा: सञ्चितकर्माणां संसूचका: सन्तीति। यथा.सुनफानफादुरुधरावेशिवाशि– उभयचरीनाभसकृतपञ्चमहापुरुषराजयोगा: परम–धनदरिद्रादय: शुभाशुभयोगा एव सञ्चितकर्म. सूचका: भवन्तीति। ग्रहदशाभि: प्रारब्धकर्माणां विचार: क्रियते। पराशरेण दशाविचारस्य महत्त्वपूर्णं स्थानं प्रदर्शयते। दशामाध्यमेन व्यक्ते मुख्यरूपेण कस्याश्चिदपि स्थिते निरूपणं भवति। कस्यां स्थितौ कस्मिन् काले अस्माकं स्थितिरनुकूला प्रतिकूला वा भविष्यतीति विवेचनं ग्रहदशाभि: क्रियते, पराशरहोराशास्त्रे महर्षिपराशरै: सप्तदशाध्यायेषु दशानां द्विचत्वारिंश.भेदानामुल्लेखो

---

१. लघुजातकम् १.३

विहित:। घटनानां कालनिधारणे दशानाम्महत्त्वपूर्णं स्थानं प्रतीयते। दशया एव प्रारब्धकर्मणं फलनिर्धारणं भवति। अस्यां स्थितौ संञ्चितकर्माण्येव प्रारब्धकर्मसु परिणतानि भूत्वा दशामाध्यमेन शुभा.शुभ फलं प्रयच्छन्ति। ज्योतिषशास्त्रे गोचरीयप्रभावै: क्रियमाणकर्मभि: सञ्चितकर्माणां प्रवृत्तिर्भवतीति। अत: क्रियमाणकर्माण्येव सर्वेषां कर्मणां नियामकानि सन्तीति। क्रियमाण.कर्माणि वर्तमान.स्थितिं प्रदर्शयन्ति। यदि सम्प्रति वयं शुभकर्मणि संलग्ना स्म: तदास्माकं सञ्चितकर्माणि प्रारब्धकर्माणि चापि शुभानि भविष्यन्तीति।[१]

अस्माकं ब्रह्माण्डे ये.ये पदार्था: विद्यामाना: सन्ति। त एवास्माकं शरीरेऽपि सूक्ष्मातिसूक्ष्म. रूपेण सन्ति। यथा प्रसिद्धोक्ति: वैदिकदर्शने प्रचलितास्ति 'यथा पिण्डे तथा ब्रह्माण्डे', अयं सिद्धान्त: वैदिकाला–दद्यावधि प्रचलितोऽस्ति। अस्माकं शरीरस्य संरचना यथास्ति तथैव अस्माकं ब्रह्माण्डस्याऽपि। अनेन स्पष्टं भवति यदत्र द्वयोर्विचारयोरेक: गूढतम: विषयोऽस्ति। तथाप्यस्माकं ऋषय: सम्यक्विचार: कृतवन्त:। अस्माकं विषयोस्ति शरीररुग्णतां प्रति कथं गच्छति? अभीष्ट. पिण्डेऽमुकविकारोऽस्तीति कथम् अयं एक: महान् प्रश्नोऽस्ति। अस्य ज्ञानं कथम् भविष्यतीति?

अभीष्टपिण्डे विकाराणां विचारकरणार्थं नानाविषया: सन्ति। ज्योतिषशास्त्रे रोगाणां विचारोऽथवा अभीष्टपिण्डे विकारोऽस्तीति विचार: ग्रहराशिभावैर्भवतीति।[२]

इदं शरीरं पञ्चभूतात्मकमस्ति। पञ्चभूतेषु यदि विकृतिरागच्छति तर्ह्यस्माकं शरीरं रुग्णतां प्रतिगच्छति परन्तु पञ्चभूतानां विकारो यद्यन्त: करणे प्रविष्टो भवति तर्हि रोगनिदाने कठिनताया: प्रतीतिर्भवति। अस्मिन् समय आधिभौतिकनिदानापेक्षयाध्यात्मिकनिदानमधिकतरं सफलं भवति। वर्तमानसमये रोगाणां निदानं प्राय: भौतिकदृष्ट्या भवति परन्तु भौतिकदृष्टेरपेक्षयाध्यात्मिक. दृष्टेरावश्यकतास्ति, भौतिकपिण्डस्योपचारस्तु भौतिकदृष्ट्या भवितुं शक्यते, परन्त्वाधिभौतिका. अध्यात्मिकाधिदैविकपिण्डानां निदानं केवलं भौतिकदृष्ट्या भवेदिति समीचीनं नास्ति। केवलं ज्योतिषशास्त्रादेवाधिभौतिकाधिदैविकाध्यात्मिकदृष्ट्या रोगनिदानस्य विचारोऽत्र प्रस्तूयते।

महर्षिपराशरानुसारं जन्माङ्गस्य द्वादशराशि, भाव, ग्रहयोगग्रहदशाभिस्तथा च गोचरीय. परिभ्रमणै: मानवानां सुख.दु:खोन्नत्यवनतीत्यादि समस्तजीवनस्य घटनाक्रमाणां विवेचनव्यवस्था होराशास्त्रे व्यवस्थिता वर्तते। जन्माङ्गस्य द्वादशभावेषु राशिषु च ग्रहयोगै: ग्रहैश्च सञ्चितकर्मणां व्याख्यास्मिन् शास्त्रे भवति। जन्माङ्गस्य शुभाशुभयोगा: सञ्चितकर्माणां संसूचका सन्तीति।[३]

---

१. रोग एवं ज्योतिष–रोगाणां सम्भावित काल:. प्रो. शकुदेव चतुर्वेदी।

२. वृहत्पराशरहोराशास्त्रम्, दशाध्याय:

३. वृहज्जातकम्– १.१५
तत्रैव जातकपरिजात राशिशीलाध्याय:। १.४९,५०,५१,५२

ज्योतिषशास्त्रानुसारेण व्यक्तेः पूर्वार्जितकर्माधारेणैव रोगा उत्पद्यन्ते। एवञ्च कीदृशः रोगः भविष्यतीत्यस्य निर्धारणं जन्मकालिक.प्रश्नकालिक.गोचरकालिकग्रहाणां स्थित्याधारेण कर्तुं शक्यते। रोगविषयकज्ञानं तथा च रोगः कथं कस्मिन् परिस्थितौ चोत्पद्यत इति विवेचनात्पूर्वं को नाम रोगः? कथञ्चायमुत्पद्यते? इति प्रश्नं समुदेति।

जन्माङ्गचक्रे लग्नादारभ्य द्वादशभावाः मन्यन्ते। तेषां नामानि सन्ति—(१) तनुभावः (२) धनभावः (३) सहजभावः (४) सुखभावः (५) सुतभावः (६) रोगभावः (७) जायाभावः (८) मृत्युभावः (९) भाग्यभावः (१०) कर्मभावः (११) लाभभावः (१२) व्ययभावश्चेति।[१]

एतैः द्वादशभावैः मानवजीवनेन सम्बद्धाः सर्वाः पक्षाः वयं ज्ञातुं शक्यामहे। एतेषां भावादीनां संज्ञास्वरूपस्य शुभाशुभत्वस्य ज्योतिषशास्त्रीयग्रन्थेषु सविस्तृतं वर्णनम् अस्ति। अत्र रोगसम्बद्धाः पक्षा एव विचार्यन्ते। रोगविचारदृष्ट्या भावादीनां महत्वमधिकमस्ति, यतोहि एतेषु भावेषु प्रथमषष्ठाष्टमद्वादशभावाश्च रोगनिर्णये साक्षात्सम्बद्धाः सन्ति, एवञ्च द्वितीयभावः सप्तमभावश्च मारकत्वेन सम्बद्धौ स्तः।[२] अतः ऐतेषु षष्ठभावः रोगनिर्णये महत्त्वपूर्णभूमिकां निर्वहति। प्रथमभावः लग्नं वा सम्पूर्णशरीरस्य स्वास्थ्यस्य वा प्रतिनिधित्वं करोति। अनेन भावेन सुखदुःखयोः शारीरिकसंगठनस्य स्वभावस्य स्वास्थ्यस्य च विचारः क्रियते। षष्ठभावस्य रिपुसंज्ञा भवति। अयं भावः शत्रूणां प्रतिनिधित्वं करोति, यतोहि रोगः स्वास्थ्यस्य प्रबलतमशत्रुः भवति, अतोऽनेन भावेन मुख्यरूपेण जातकानां जीवने जायमानाः रोगाः विचार्यन्ते।

अष्टमभावः आयुर्भावः मृत्युसंज्ञको भवति। आयुः मृत्युश्च परस्परसम्बद्धौः स्तः।[३] यतोहि आयुपूर्णे सति मृत्युर्भवति तथा यदा मृत्युर्भवति तदा आयुषः स्वयमेव समाप्तिर्भवति, परन्तु मृत्योः किमपि कारणं अवश्यं भवति। तत् कारणं कश्चित् रोगः काचित् दुर्घटना अथवा किंचिदन्यकारणमपि भवितुमर्हति। एवं प्रकारेण अनेन भावेन मृत्युदायकरोगः मृत्योः कारणम्भवतीति रोगादीनां साध्यासाध्यनिर्णयोः महत्वपूर्णं स्थानमस्ति। यावत्पर्यन्तं आयुः अवशिष्टः तावत् पर्यन्तं कश्चिदपि रोगोऽसाध्यः न भवति, परन्तु आयुः यदा पूर्णं भवति तदा सामान्यरोगोऽपि असाध्यो भवति। द्वादशभावः एव व्ययभावः अर्थात् हानिभावः यतोहि सर्वे रोगाः शारीरिकशक्तीनां प्राणशक्तिनां च कारकाः भवन्ति, अतो अनेन भावेनाऽपि रोगविचारः क्रियते। जन्माङ्गचक्रे अष्टमादष्टमम् अर्थात् तृतीयभावः आयुर्भावो भवति। एवं द्वादशभावश्च व्ययभावः इति। तथैव द्वितीयभावः सप्तमभावश्च मृत्युसूचको भवति, एताभ्याम् भावाभ्याम् मृत्युतुल्यकष्टानि विचार्यन्ते। अतः द्वितीयसप्तमभावौ मारकभावौ। अनेन स्पष्टमिदं यत् जन्माङ्गचक्रेषु स्थितेषु द्वादशभावेषु प्रथम.द्वितीय.षष्ठ.सप्तम्.अष्टम्.द्वादशभावाः रोगविधायिकाः भावाः। अतः एतेषां भावानां विचारः रोगनिर्णये

१. वृहज्जातकम् १.४ वृहत्पराशरहोराशास्त्र, वर्गविवेचनाध्यायः श्लो. ३७–४०
२. लघुपाराशरी ४.२३
३. जातकपारिजातः, राशिशीलाध्यायः १.५१
वृहज्जातकम् १.१९

क्रियते। रोगानां परिज्ञानार्थं यानि साधनानि प्रयुज्यन्ते तान्युपकरणानि कथ्यन्ते। रोगविचारार्थं ग्रहराशिभावाः ग्रहयोगादयश्च प्रमुखान्युपकरणानि सन्ति। जातकस्य सम्पूर्णशरीरस्य तान्युपकरणानि प्रतिनिधित्वं कुर्वन्ति। यस्मिन् भावे ये राशयः भवन्ति तेषां प्रभावः ग्रहाणां प्रभावानुरूपं भवति। यतोहि राशि ग्रहाधीनो भवति। अतः राशयः भावविशेषे स्थितानां ग्रहणां गुणधर्मैः प्रभाविता भवन्ति।[१]

जन्माङ्गचक्रस्य प्रथमभावः शीर्षस्य, द्वितीयभावः मुखस्य, तृतीयभावः भुजयोः, चतुर्थभावः हृदयस्य, पंचमभावः उदरस्य, षष्ठभावः कटेः, सप्तमभावः बस्तेः, अष्टमभावः गुप्ताङ्गस्य, नवमभावः उरोः, दशमभावः जानुप्रदेशस्य, एकादशभावः जंघयोः, द्वादशभावः पादयोः प्रतिनिधिकारकः भवति।[२] यदि लग्नेशो पापग्रहैरन्तर्गतः स्यात्तदा जातकः रुग्णो भवति। ये ग्रहाः यस्मिन् भावे स्थिता भवन्ति अथवा यस्य भावस्य प्रतिनिधित्वं कुर्वन्ति त एव ग्रहाः तत्सम्बन्धितधातूनां प्रतिनिधित्वमपि कुर्वन्ति, यथा सूर्योऽस्थेः, चन्द्रो रक्तस्य, भौमो मांसस्य, बुधः त्वचायाः, वृहस्पतिः वसायाः, शुक्रः वीर्यस्य, शनिः स्नायोरिति।[३]

यदा बुधः लग्नेतरस्थाने पापग्रहयुक्तः दृष्टः वा स्यात् तदा त्वक्रोगो अवश्यमेव जायते, परन्तु यदा स एव बुधो जन्मलग्ने, चन्द्रलग्ने वा स्थितः स्यात्तथा च स एव बुधः पापग्रहान्तर्गतः स्यात्तदावश्यमेव शरीरे रोगोत्पन्नं करिष्यति, विशेषरूपेण यदि कोऽपि ग्रहोः लग्ने स्थितः स्यात् अथवा लग्नेशो भवेत् तदा सः शरीरस्थिततत्त्वानां विशेषरूपेण नियामको भवतीति। अस्मानन्तरं दशामाध्यमेन ग्रहाणां तत्सम्बन्धितरोगाः अनिष्टग्रहदशायां सम्भवन्ति।

प्राचीनकालात् ज्योतिषशास्त्रे नवग्रहाणां वर्णनं प्राप्यते। ज्योतिषशास्त्रमर्मज्ञाः ग्रहाणां गुणधर्माणां सम्यगवलोकनं निरीक्षणञ्च कृत्वैव तेषां शुभाशुभफलानि परिभाषितवन्तः। मुख्यतया रोगविचारः ग्रहराशि. भावैर्माध्यमेन भवति परञ्च षष्ठाष्टम्.द्वादश.सप्ततृतीयश्च भावः तत्रैव महति भूमिका निर्वहति। रोगाणां सम्भावितकालविचारः दशामाध्यमेन कर्तुं शक्यते।

१. जातकपारिजातः— १८.१
२. वृहज्जातकम् १.१५
३. जातकपारिजातः २.२८

# न्यायमते सन्निकर्षस्वरूपम्

**डॉ. बिष्णुपदमहापात्रः**

प्रत्यक्षानुमानोपमानशब्दाख्यप्रमाणचतुष्टये प्रत्यक्षस्य प्राधान्यात् सर्ववादिसम्मतत्वाद् आदौ प्रत्यक्षस्य लक्षणं सूत्रकारेण भगवताऽक्षपादगौतमेन सूत्रितं यत् 'इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारिव्यवसायात्मकं प्रत्यक्षम्[१]' इति। अर्थात् प्रत्यक्षप्रमां प्रति इन्द्रियं करणम्, इन्द्रियार्थसन्निकर्षः व्यापारः। करणं तावत् व्यापारवदसाधारणकारणात्मकम्। व्यापारस्तु तज्जन्यत्वे सति-तज्जन्यजनकत्वात्मकः। प्रत्यक्षत्वावच्छिन्नं प्रति यदिन्द्रियं करणं भवति तदेव प्रत्यक्षप्रमाणम्। आत्ममनः संयोगे मन इन्द्रियसंयोगे इन्द्रियार्थसंयोगे च सति यज्ज्ञानमुत्पद्यते तत्प्रत्यक्षमिति नैयायिकानां सरणिः। इन्द्रियार्थसन्निकर्षेतरकारणानाम् अनुमित्यादौ समानत्वात् प्रत्यक्षस्य यद्विशिष्टं कारणं भवति स च इन्द्रियार्थसन्निकर्षः। इन्द्रियाणि तावत् घ्राण-रसन-चक्षु-स्त्वक्-श्रोत्रभेदेन पञ्चविधानि। उक्तं च सूत्रकारेण—'घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्यः।[२]' एतानि बहिरिन्द्रियाणि भूतप्रकृतिकानि भवन्ति। आन्तरस्य तु मनसः न तथा । अतएव सूत्रकारेण इन्द्रियप्रकरणादन्यत्र मनसः प्रसङ्गः कृतः। न खल्वत्र मनसः सन्दर्भः प्रदत्तः। आभ्यन्तरं हीन्द्रियं मनः, तच्चाभौतिकं सर्वविषयम्। शिष्टानि तावत् पञ्चबाह्येन्द्रियाणि प्रतिनियतविषयग्रहणपटूनि भौतिकानि। 'इन्द्रियस्य वै सतो मनस इन्द्रियेभ्यः पृथगुपदेशो धर्मभेदात्। भौतिकानि इन्द्रियाणि नियतविषयाणि। सगुणानाञ्चैषामिन्द्रियाभाव इति। मनस्त्वभौतिकं सर्वविषयञ्च।[३]'

पञ्चानामेतेषामिन्द्रियाणां कारणानि पुनः पञ्चभूतानि पृथिव्यप्तेजोवायव्याकाशानि,[४] पृथिव्यापस्तेजो वायुराकाशमिति भूतानि[५]। यथाक्रमं पृथिव्यादिभूतगुणाः गन्ध-रूप-रस-स्पर्श-शब्दा इन्द्रियार्थाः,

---

१. न्या.सू., १.१.४
२. न्या.सू., १.१.१२
३. न्या.भा., पृ.सं. १५
४. न्या.सू., १.१.१३
५. न्या.सू., १.१.१४

'गन्धरसरूपस्पर्शशब्दाः पृथिव्यादिगुणास्तदर्थाः।' शास्त्रान्तरप्रथितानि वाक्पादादीनि कर्मेन्द्रियाणि नैयायिकैः नाभ्युपगम्यन्ते। पञ्चानामिन्द्रियाणामेषां विशेषलक्षणानि यथा—जिघ्रत्यनेनेति घ्राणम्, घ्राणं गन्धं गृह्णाति। गन्धोपलब्ध्यसाधारणकारणं, गन्धग्राहकत्वे सति इन्द्रियत्वं वा घ्राणसामान्यलक्षणम्। रसयत्यनेनेति रसनम्, रसं गृह्णाति। रसोपलब्ध्यसाधारणकारणम्, रसग्राहकत्वे सति इन्द्रियत्वं वा रसनसामान्यलक्षणम्। चष्टेऽनेनेति चक्षुः, रूपं पश्यति। रूपोपलब्ध्यसाधारणकारणम्, रूपग्राहकत्वे सतीन्द्रियत्वं वा चक्षुस्सामान्यलक्षणम्। स्पृशत्यनेनेति स्पर्शनं, स्पर्शं गृह्णाति। स्पर्शोपलब्ध्यसाधारणकारणम्, स्पर्शग्राहकत्वे सतीन्द्रियत्वं वा स्पर्शनसामान्यलक्षणम्। शृणोत्यनेनेति श्रोत्रं, शब्दं गृह्णाति। शब्दोपलब्ध्यसाधारणकारणम्, शब्दग्राहकत्वे सतीन्द्रियत्वं वा श्रोत्रसामान्यलक्षणं पर्यवसितम्। बाह्येन्द्रियविषये मानमेयोदयकारः प्रवदति—

**चक्षुर्नाम कनीनिकान्तरगतं तेजोऽथ जिह्वाग्रग-**
**स्तोयांशो रसनं क्षितेरवयवो घ्राणं च घोणोदरे।**
**सर्वाङ्गप्रसृताश्च मारुतलवास्त्वङ्नाम कर्णोदर-**
**व्योमैव श्रवणं मनस्तु विभु तद्देहे च कार्यावहम्॥**[६]

प्रत्यक्षप्रमायाः व्यापारभूतः सन्निकर्षस्तु लौकिकालौकिकभेदेन द्विविधः भवति। परन्तु अत्र शङ्का उदेति सन्निकर्षस्य का व्युत्पत्तिः, तस्य च किं लक्षणम्? सम्+नि+कर्षः सन्निकर्षः सम्बन्धः, अर्थात् विषयेण सहेन्द्रियस्य सम्बन्ध एव व्यापारः सन्निकर्ष उच्यते। इन्द्रियाणां प्राप्य कारित्वमस्तीत्यतः इन्द्रियार्थयोः षड्विधः सन्निकर्षः बाह्यप्रत्यक्षेहेतुरिति अभिवर्णयन्ति न्यायमञ्जरीकाराः 'अत एव सर्वेन्द्रियाणां प्राप्यकारित्वं पश्यद्भिः शास्त्रज्ञैः इन्द्रियार्थसन्निकर्षः षट्प्रकारो व्याख्यातः[७]।' सन्निकर्षपदमिदं प्रथमतः सूत्रकारेण प्रत्यक्षलक्षणे ततश्च भाष्यकारेण प्रयुक्तमिति।

**लौकिकसन्निकर्षः**

लौकिकसन्निकर्षः षड्विध इति सर्वप्रथमतया श्रीमता भारद्वाजोद्योतकरेण प्रतिपादितम्। 'सन्निकर्षः पुन षोढाभिद्यते, संयोगः संयुक्तसमवायः संयुक्तसमवेतसमवायः समवायः समवेतसमवायो विशेषण-विशेष्यभावश्चेति[८]'। तत्र घटादिद्रव्येण सह चक्षुरादेरिन्द्रियस्य संयोगः सन्निकर्षः। तद्गतरूपादिना गुणादिना सह संयुक्तसमवायः सन्निकर्षः। यतः चक्षुस्संयुक्ते घटद्रव्ये रूपं समवायेन वर्तते। रूपादिगतरूपत्वादिजातिप्रत्यक्षे संयुक्तसमवेतसमवायसन्निकर्षः। तत्र चक्षुस्संयुक्ते घटे रूपस्य समवेतत्वम्। तत्र च रूपत्वस्य समवायेन

---

६. मा. मे. का. सं. ७
७. न्या.म. पृ. ४८०
८. न्या. वा. पृ. १९९

वृत्तित्वात्। शब्दस्य गुणत्वाच्छब्दप्रत्यक्षे समवायसन्निकर्षः। श्रोत्रसमवेते शब्दे शब्दत्वस्य समवायात् शब्दत्वजातिप्रत्यक्षे समवेतसमवायसन्निकर्षः। अभावप्रत्यक्षे समवायप्रत्यक्षे च विशेषणभावस्सन्निकर्षः। चक्षुस्संयुक्ते भूतले घटाद्यभावस्य विशेषणत्वात्। उक्तं च कारिकावलीकारेण विश्वनाथपञ्चाननेन—

**विषयेन्द्रियसम्बन्धो व्यापारः, सोऽपि षड्विधः।**
**द्रव्यग्रहस्तु संयोगात् संयुक्तसमवायतः॥**

**द्रव्येषु समवेतानां, तथा तत्समवायतः।**
**तत्रापि समवेतानां, शब्दस्य समवायतः॥**

**तद्वृत्तीनां समवेतसमवायेन तु ग्रहः।**
**प्रत्यक्षं समवायस्य विशेषणतया भवेत्॥**

**विशेषणतया तद्वदभावानां ग्रहो भवेत्।**
**यदिस्यादुपलभ्यतेत्येवं यत्र प्रसज्यते॥**[१]

तत्रेदमवधातव्यं यत्—घटादिद्रव्यपदार्थाः द्विन्द्रियग्राह्याः भवन्ति। चक्षुषा त्वगिन्द्रियेण वा संयोगाद् घटादिद्रव्यस्य ज्ञानं जन्यते। 'चक्षुःस्पर्शनसंयोगाद् घटादिद्रव्यज्ञानम्[२]। चक्षुःस्पर्शनाभ्यां संयुक्तसमवाय-सन्निकर्षाद् घटत्वसत्त्वपृथिवीत्वादीनि संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वकर्माणि च ग्राह्याणि भवन्ति, अतः एतानि द्विन्द्रियग्राह्याणि भवन्ति। संयुक्तसमवायात् ताभ्यां घटत्वसंख्यापरिमाणादिज्ञानम्[३]। संयुक्तसमवायसन्निकर्षादेकैकेन्द्रियग्राह्येषु ज्ञानानि यथा—

चक्षुषैव रूपज्ञानं, स्पर्शनेनैव स्पर्शज्ञानं, घ्राणेनैव गन्धज्ञानं, रसनेनैव रसज्ञानं, मनसैव सुखादिज्ञान-मिति[४]। चक्षुषैवेत्यादावेवकारो बाह्येन्द्रियान्तरनिषेधाय, रूपादिज्ञाने मनसोऽपि कारणत्वात्। मनसैवेत्यत्रैवकारो बाह्येन्द्रियाणां प्रतिषेधपरः बोध्यः। एवञ्च समवायस्य प्रत्यक्षत्वं नास्तीति वैशेषिकाः प्रवदन्ति, तेषां मते समवायः अनुमानगम्यः।'तत्र प्रमाणं तु गुणक्रियादिविशिष्टबुद्धिर्विशेषणविशेष्यसम्बन्धविषया विशिष्टबुद्धित्वाद् दण्डी पुरुष इति विशिष्टबुद्धिवद् इत्यनुमानम्।[५]' अर्थात् यथा 'दण्डवान् पुरुष' इति विशिष्टबुद्धिः, तत्र विशेषणं दण्डः, विशेष्यः पुरुषः, तयोः सम्बन्धस्तु संयोगः, तद्विषयिणी भवति, तथा गुणवान् घट इत्यत्र

१. कारिका, ५९-६०
२. न्या. सा. पृ. १५४
३. न्या. सा. पृ. १५६
४. न्या सा. पृ. १५६
५. न्या. सि. मु. पृ. ५४

विशेषणं गुणो विशेष्यो घटः, तयोर्यः सम्बन्धः स समवाय एवेति तद्विषयकत्वं तादृशविशिष्टबुद्धौ वर्तते। तत्र च संयोगस्वरूपादीनां बाधात्तादृशविशिष्टबुद्धिविषयस्य समवायस्यातिरिक्तसम्बन्धतया सिद्धिर्भवति। न्यायमते तु समवायस्य विशेषणविशेष्यभावसन्निकर्षेण प्रत्यक्षं भवति। तत्रापि अनुमानं प्रदर्शयति पदपञ्चिकाकारः—'शुक्लः पट इत्यादिप्रत्यक्षप्रत्ययः प्रत्यक्षेण ज्ञायमानसम्बन्धपूर्वकः प्रत्यक्षात्मकविशिष्टप्रत्ययत्वाद् दण्डीति प्रत्ययवत्[१]'। भासर्वज्ञोऽपि समवायस्य प्रत्यक्षत्वं साधितवान्। 'समवायस्य तु क्वचिदेव ग्रहणम्। यथा घटे रूपसमवायः, रूपसमवायवान् घटः इति।[२]' अर्थात् विशेषणविशेष्यभावसन्निकर्षेण समवायस्य प्रत्यक्षं भवति। न्यायचन्द्रिकाकारमते च 'तत्र संयोगेन द्रव्यग्रहः। संयुक्तसमवायेन रूपग्रहः। विशेषणतया घटाभावादेर्ग्रहणम्। इन्द्रियसम्बद्धे भूतले घटाभावस्य विशेषणता नाम सम्बन्धोऽस्ति। साक्षाद्विशेषणतया शब्दाभावो गृह्यते।[३]' सन्निकर्षस्यास्य लौकिकस्य संख्याविचारे वार्तिकोक्तः षड्विध एवेति निर्णय एव परमः सिद्धान्त। एवञ्चालोकादीनां सूत्र-भाष्यानुक्तानामपि यथा अन्वयव्यतिरेकबलात् प्रत्यक्षकारणत्वमभ्युप-गम्यते तथा सूत्रभाष्ययोः कण्ठरवेणानुक्तानामपि प्रसंगवशात् सूचितानां षड्विधानां सन्निकर्षाणामभ्युपगमे न काऽप्यनुपपत्तिः।

वैशेषिकदर्शनेऽपि असूचि बहुधा सन्निकर्षषट्कम्। यथा आत्मप्रत्यक्षं प्रति मनस्संयोगाख्यः सन्निकर्षः कारणम्। उक्तं च सूत्रकारेण कणादेन 'आत्ममनसोः संयोगविशेषादात्मप्रत्यक्षम्[४]' इत्यनेन द्रव्यप्रत्यक्षं प्रति इन्द्रियसंयोगः कारणमिति संसूचितम्। एवमेव 'आत्मसमवायादात्मगुणेषु[५]' सूत्रेण आत्मसमवेतानां ज्ञानादिगुणानां प्रत्यक्षं मनस्संयुक्तसमवायनिबन्धनमिति गम्यते। एवञ्च द्रव्यगतगुणप्रत्यक्षे संयुक्तसमवायः सन्निकर्षः भवति। द्रव्यगतानां गुणक्रियादीनां प्रत्यक्षं संयुक्तसमवायाख्यसन्निकर्षाद् भवति। प्रतिपादितं सुत्रकारेण कणादेन। 'अनेकद्रव्यसमवायाद् रूपविशेषाच्च रूपोपलब्धिः[६]' 'संख्या परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे कर्म च रूपद्रव्यसमवायाच्चाक्षुषाणि[७]' इति। एवमेव 'एतेन गुणत्वे भावे च सर्वेन्द्रियं ज्ञानं व्याख्यातम्[८]' इति सूत्रेण गुणप्रत्यक्षे यथा द्रव्यसमवायः कारणं तथैव गुणगतगुणत्वजातिप्रत्यक्षेऽपि

१. पदपञ्चिका, पृ. १६
२. न्या. सा. पृ. १६८
३. वै. सू. ९.१.११
४. वै. सू. ९.१.१५
५. वै. सू. ९.१.१५
६. वै. सू. ४.१.८
७. वै. सू. ४.१.११
८. वै. सू. ४.१.१३

संयुक्तसमवेतसमवाय: हेतुरिति स्पष्टीकृतम्। श्रोत्रस्य आकाशरूपत्वाभ्युपगमेन शब्दस्य आकाशगुणत्वकथनेन श्रोत्रसमवाय: शब्दप्रत्यक्षे कारणम्, 'श्रोत्रग्रहणो योऽर्थ: स शब्द:[१]' इति। 'एतेन गुणत्वे भावे च' इत्यादि सुत्रेण शब्दत्वप्रत्यक्षे समवेतसमवायसन्निकर्ष इति संसूचितमित्यभ्युपगन्तव्यम्। अभावप्रत्यक्षे च विशेषणविशेष्यभावसन्निकर्ष: इति कणादेनापि सूचितम्। 'असदिति भूतप्रत्यक्षाभावाद् भूतस्मृते- र्विरोधिप्रत्यक्षवत्[२]'। अर्थात् असन् घट इति अभावप्रत्यक्षं विरोधिप्रत्यक्षवत् प्रतियोगिघटप्रत्यक्षसमानम्। प्रतियोगिन: घटस्य प्रत्यक्षं यथा लौकिकसन्निकर्षजन्यं भवति तथैव तदपि तज्जन्यं भवति। स च सन्निकर्ष: सन्निकर्षान्तरं विशेषणतात्मकं भवति इति न्यायकन्दलीकारेणप्रतिपादितम्। अर्थात् न्यायवैशेषिकयो: नये षड्विध: लौकिकसन्निकर्ष: प्रतिपादित अस्तीति।

**अलौकिकसन्निकर्ष:**

अलौकिकसन्निकर्षस्तु नैयायिकस्त्रिप्रकार: प्रतिपादित:, सामान्यलक्षण-ज्ञानलक्षण-योगजभेदात्। उक्तं च विश्वनाथेन—

**अलौकिकस्तु व्यापारस्त्रिविध: परिकीर्तित:।**
**सामान्यलक्षणो ज्ञानलक्षणो योगजस्तथा॥**[३]

समानानां भाव: सामान्यम्, अनेकानुगतो धर्म:। यथा धूमत्वादि:, तत्स्वरूप: सामान्यलक्षणाख्य: सन्निकर्ष:। अत्र प्रत्यासत्ति: सन्निकर्ष: इत्यनर्थान्तरम्। 'सामान्यं लक्षणं यस्येत्यर्थ:। अत्र लक्षणपदेन यदि स्वरूपमुच्यते, तदा सामान्यस्वरूपा प्रत्यासत्तिरित्यर्थो लभ्यते।[४]' येनेन्द्रियेण यद्धर्माश्रयसकलव्यक्तिविषयक- प्रत्यक्षं जननीयं तदा प्रथमं तद्धर्माश्रयक्वचिद्व्यक्तौ इन्द्रियसन्निकर्ष: यथा-धूमे चक्षु: संयोग:। तत: धूम इति ज्ञानम्। तदनन्तरं तत्प्रकारकत्वविशिष्टधूमत्वस्य, सामान्यलक्षणासन्निकर्षस्य सकलधूमेषु सत्त्वात् धूमा: इत्येवं सकलधूमविषयकं प्रत्यक्षं भवतीति प्राचीनमतम्। नव्यास्तु सामान्यं लक्षणं। विषय: यस्य स सामान्यलक्षण इति। लक्षणशब्दस्य विषयार्थकत्वेन सामान्यविषयकं ज्ञानं प्रत्यासत्तिरित्यर्थो लभ्यते। तद्घटरूपसामान्यस्य सन्निकर्षस्य नाशेऽपि तद्घटवत: स्मरणे सति तदुत्तरं तद्घटवतां समेषां अलौकिकप्रत्यक्षमनुभवसिद्धम्। तत्तु प्राचीनमते नैव घटते। ज्ञायमानसामान्यरूपघटात्मकप्रत्यासत्ते: विनष्टत्वात्। अत: यथाकथञ्चिज्जातं सामान्यज्ञानं प्रत्यासत्ति:। तच्च स्मृतिनिर्विकल्पकल्पकसाधारणम्। घटस्य नाशेऽपि घटस्मरणरूपसामान्यलक्षणाया: सत्त्वादेव

१. वै. सू. २.२.२१
२. वै. सू. ९.१.६
३. कारि. ६३
४. न्या. सि. मु. पृ. २०९

समेषां तद्घटवतामलौकिकप्रत्यक्षं प्रसज्यते। 'आसत्तिराश्रयाणां तु सामान्यज्ञानमिष्यते। तदिन्द्रियजतद्धर्म-बोधसामग्र्यपेक्ष्यते॥[१]' मानसवहिरिन्द्रियजन्यभेदात् सामान्यलक्षणया जायमानम् अलौकिकप्रत्यक्षं द्विविधं भवति।

ज्ञानमेव लक्षणं स्वरूपं यस्य सः ज्ञानात्मकसन्निकर्षः इति व्युत्पत्त्या तस्य लक्षणमुच्यते 'विषयी यस्य तस्यैव व्यापारो ज्ञानलक्षणः[२]' अर्थात् तद्धर्मज्ञानात् तद्धर्मप्रत्यक्षोत्पत्तौ ज्ञानलक्षणेति व्यवहारः। स्वप्रकारीभूततद्धर्मवत्तासम्बन्धेन प्रत्यक्षत्वावच्छिन्नं प्रति स्वविषयतद्धर्मवत्तासम्बन्धेन सामान्यलक्षणायाः कारणत्वम्। अलौकिक विषयतासम्बन्धेन प्रत्यक्षं प्रति विषयतासम्बन्धेन ज्ञानलक्षणायाः कारणत्वमिति विशेषः। एवं च उभयोः प्रत्यासत्योः ज्ञानरूपत्वेऽपि फलवैचित्र्यात् भेदव्यवहारः। तथाहि घटत्वज्ञानात् घटत्ववतां प्रत्यक्षजननात् सामान्यलक्षणेति व्यवहारः। घटत्वज्ञानजननात् ज्ञानलक्षणेति व्यवहारः। अत्र केचिदामनन्ति ज्ञानलक्षणायाः सामान्यलक्षणायामेवास्त्वन्तर्भावः स्यादिति। तन्न समीचीनम्, यतः सुरभि चन्दनम्, इति प्रत्यक्षे सौरभस्य भानं ज्ञानलक्षणामन्तरा नोपपद्यते। 'एवं ज्ञानलक्षणाया अस्वीकारे' 'सुरभि चन्दनमिति' ज्ञाने सौरभस्य भानं कथं स्यात्।[३] तदिन्द्रियजन्यज्ञाने तदिन्द्रियग्रहणायोग्यधर्मस्य स्वरूपतो भाननिर्वाहार्थं ज्ञानलक्षणात्मकः अलौकिकसन्निकर्षः अभ्युपेयः।

योगाभ्यासजन्यः धर्मविशेषः वेदशास्त्रपुराणादिभिः प्रतिपद्यमानः योगज इत्युच्यते। युक्त-युञ्जानभेदाद् योगाजसन्निकर्षः द्विविधः। तदनुरोधं तद्धर्मस्यापि द्वैविध्यमुपगम्यते। 'योगजो द्विविधः प्रोक्तो युक्तयुञ्जानभेदतः[४]।' यस्य पुनः योगजधर्मसहायेन आकाशपरमाण्वादिसकलपदार्थज्ञानं सर्वदा सम्भवति स युक्त इत्युच्यते। यस्य च चिन्ताविशेषोऽपि सहकारी भवति स युञ्जान इति। उक्तं च कारिकावलीकारेण विश्वनाथपञ्चाननेन 'युक्तस्य सर्वदा भानं चिन्तासहकृतोऽपरः[५]'। एतस्मात् कारणात् सिद्धं यत् प्रत्यक्षस्य व्यापारभूतः सन्निकर्षः लौकिकालौकिभेदेन द्विविधः पर्यवसितः।

---

१. कारि. ६४
२. आप. १.३९-४२
३. न्या, सि. मु. पृ. २१६
४. कारि. ६५
५. कारि. ६६

# काचन नव्यन्वायसूक्ष्मेक्षिका

## ( व्याप्तेः सिद्धान्तलक्षणसन्दर्भे )

**भुवनेश्वरी भारद्वाज**

व्याप्तेः[1] पूर्वलक्षणेषु[2] केवलान्वयिसध्यकसद्धेतुस्थले अव्याति[3] सद्भावात् सिद्धान्तलक्षण[4] मुच्यते तत्त्वचिन्तामणौ नव्यन्यायविशारदेन श्रीमता गङ्गेशोपाध्यायेन—

''हेतुसमानाधिकरणात्यन्ताभावीयप्रतियोगितानवच्छेदकं यत् साध्यतावच्छेदकं तदवच्छिन्नसाध्य-सामानाधिकरण्यं व्याप्तिरिति।''[5]

तथाहि-वह्निमान् धूमादित्यत्र हेतुः धूमः तत्समानाधिकरणः (तदधिकरणवृत्तिः) (वह्नेः तत्र सत्वात्), तत्प्रतियोगिता घटे पटादौ वा, तदवच्छेदकं घटत्वादि, तदनवच्छेदकं तु वह्नित्वं तच्च साध्यतावच्छेदकं

---

१. (क) नन्वनुमितिहेतुव्याप्तिज्ञाने का व्याप्तिः, व्याप्तिपञ्चकमाधुरी, पृ. १
   (ख) यत्र धूमस्तत्राग्निरिति साहचर्यनियमो व्याप्तिः, तर्कसङ्ग्रह, पृ. ४९
   (ग) व्याप्यत्वं तदभाववद् वृत्तित्वरूपमेकं स्वव्यापकत्वं, तत्सामानाधिकरण्यम्, अपरम्, तर्कसङ्ग्रहसर्वस्वम्, पृ. ३८

२. (क) साध्याभाववदवृत्तित्वम्।
   (ख) साध्यवद्भिन्न साध्याभाववद्वृत्तित्वम्।
   (ग) साध्यवत्प्रतियोगिकान्योन्याभावासामानाधिकरण्यम्।
   (घ) सकलसाध्याभाववन्निष्ठाभावाप्रतियोगित्वम्।
   (ङ) साध्यवदन्यावृत्तित्वम्।

३. अत्रोच्यते-प्रतियोग्यसमानाधिकरणयत्समानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नं यन्न भवति तेन समं तस्य सामानाधिकरण्यं व्याप्तिः-सिद्धान्तलक्षणम्, पृ. १ (तत्त्वचिन्तामणिः)

४. अथवा हेतुमन्निष्ठविरहा प्रतियोगिना।
   साध्येन हेतोरैकाधिकरण्यं व्याप्तिरुच्यते॥ कारिकावली, ६९

५. प्रतियोग्यसमानाधिकरणयद्रूपविशिष्टसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदको यो धर्मस्तद्धर्मावच्छिन्नेन येन केनापि समं सामानाधिकरण्यम्, तद्रूपविशिष्टस्य तद्धर्मावच्छिन्नयावन्निरूपिता प्याप्तिरित्यर्थः। सिद्धान्तलक्षणम्, पृ, १,५,२३

विद्यते, अतः तदवच्छिन्नं साध्यं वह्निर्भवति, तत्सामानाधिकरण्यं धूमे सुतरां संघटते इत्येवं लक्षणसमन्वयात् एतल्लक्षणम्[1] अव्याप्तिदूषणराहित्यं भजते[2]। यतश्च नाव्याप्तिः अतएव[3] नासम्भवोपि।

न चास्य व्याप्तिलक्षणस्य अतिव्याप्ति[4]सिदूषणतापि सम्भवति। तद्यथा-धूमवान् वह्नेरित्यत्र हेतुः वह्निः, तत्समानाधिकरणः अत्यन्ताभावः धूमाभावः, तत्प्रतियोगिता धूमे, तदवच्छेदकमेव धूमत्वं न तु अनवच्छेदकं साध्यतावच्छदेकं भवतीति लक्षणा-संघटनात्।

परमत्र विचार्यताम्-हेतुसमानाधिकरणेत्यादि-स्वरूपे व्याप्तिलक्षणे अव्याप्तिस्तुदुर्वारैव, कपिसंयोगी एतद्वृक्षत्वादित्यत्र सद्धेतौ लक्षणासंघटनात्। तथाहि-अत्र हेतुः एतद्वृक्षत्वं, तदधिकरणम् एतद्वृक्षः, तत्समानाधिकरणः अत्यन्ताभावः कपिसंयोगाभावः (इह वृक्षे शाखायां कपिसंयोगः न तु मूले इति अबाधितप्रतीतेः), तादृशाभावप्रतियोगितावच्छेदकमेव साध्यतावच्छेदकं कपिसंयोगत्वं, न तु अनवच्छेदकम् इत्येवं लक्षणसमन्वयो न भवति।

अत्रोच्यते-एतद् दूषणम् अपाकर्तुमेव लक्षणघटके अभावे प्रतियोगिवैयाधिकरण्यम् इति विशेषणं निवेश्यते। एवञ्च लक्षणशरीरं सम्पद्यते-प्रतियोगिव्यधिकरण-हेतुसमानाधिकरणात्यन्ताभावीय-प्रतियोगितान-वच्छेदकं यत् साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिरिति।

कृते च लक्षणघटके अभावे प्रतियोगिवैयाधिकरण्यमिति विशेषनिवेशे ''कपिसंयोगी एतद्वृक्षत्वात् '' इत्यत्र प्रसक्ता अव्याप्तिः पलायिता भवति। तथाहि-कपिसंयोगाभावः कामं हेतुसमानाधिकरणः विद्यते परमसौ प्रतियोगिव्यधिकरणे नास्ति। यतोहि प्रतियोगिव्यधिकरणो नाम प्रतियोगिनः अधिकरणे अवर्तमानः। यश्चायं कपिसंयोगाभावः, तस्य प्रतियोगी कपिसंयोगः,तदधिकरणं वृक्षः तत्रासौ अभावः वर्तमानो भवति न तु अवर्तमानः। यथा चेयं प्रतीतिः शाखावच्छेदेन वृक्षे कपिसंयोग इति। एवञ्च कपिसंयोगाभावः प्रतियोगिव्यधि-करणत्वाभावात् लक्षणघटकः भवितुं नार्हति किन्तु घटाभावादिः लक्षणघटकतया गृहीतुं शक्यते, तादृशाभावप्रति-योगितावच्छेदकं घटत्वादिर्भवति, तदनवच्छेदकं साध्यतावच्छेदकं कपिसंयोगत्वं भवति, तदवच्छिन्नं साध्यं कपिसंयोगः तत्सामानाधिकरण्यं एतद्वृक्षत्वे सुतरां संघटते इत्येवं लक्षणसमन्वयात् अव्याप्ति-दूरापेता भवति।

---

१. एतद्दूषणत्रयरहितधर्मो लक्षणम्। स एवासाधारणधर्मइत्युच्यते। लक्षयतावच्छेदकसमनियतत्वमसाधारणत्वम्। -तर्कसङ्ग्रहदीपिका, पृ. १८१, (टीकानवकोपेतम्)
२. लक्ष्यैकदेशावृत्तित्वम् अव्याप्तिः। -तर्कसङ्ग्रदीपिका, पृ. ११७
३. लक्ष्यमात्रावृत्तित्वमसम्भवः। -तर्कसङ्ग्रहदीपिका, पृ. १२१
४. अलक्ष्ये लक्षणस्य वर्तनमतिव्याप्तिः। तर्कसङ्ग्रदीपिका, पृ. १२१

हंहो स्थूलधीर्भवान् यद् अभावे प्रतियोगिवैयधि-करण्यनिवेशेन ''कपिसंयोगी एतद्वृक्षत्वा'' दित्यत्र अव्याप्तिवारणमधिगच्छति। यतो हि प्रतियोगिवैयधिकरण्यं नाम प्रतियोग्यमधिकरणवृत्तित्वम्[१], तच्च कपिसंयोगाभावेऽपि विद्यते, प्रतियोगिन: कपिसंयोगस्य अनधिकरणे गुणे कपिसंयोगाभावस्य वृत्तेः। एवञ्च कपिसंयोगाभावस्य लक्षणघटकतया तादृशप्रतियोगितावच्छेदकमेव साध्यतावच्छेदकं कपिसंयोगत्वं न तु तदनवच्छेदकमिति लक्षणघटकाभावे प्रतियोगिवैयधिकरण्य-निवेशे कृतेऽपि नाऽव्याप्तिरपह्नियते।

अथ प्रतियोगिवैयाधिकरण्यं नाम प्रतियोग्यधिकरणावृत्तित्वं[२] विवक्षितम्। तथा च कपिसंयोगाभावस्य प्रतियोगिन: अधिकरणे वृक्षे वर्तमानत्वमेव न तु अवृत्तित्वमिति कपिसंयोगाभावस्य लक्षणाघटकतया अव्याप्तिरपाकृता-भवतीत्युच्यते तदपि देवानां प्रियत्वमेव आत्मन: ख्यापयन्नाभाति भवान् यत् प्रतियोग्यधिकरणावृत्तित्वम् इत्येवमर्थकरणेन प्रतियोगिवैयधिकरण्यनिवेशात् लक्षणे दूषण-राहित्यं वाञ्छति। तथाहि प्रतियोगिवैयधिकरण्यमित्यस्य प्रतियोग्यधिकरणावृत्तित्वमित्येवमर्थकरणे कामं कपिसंयोगी एतद्वृक्षत्वादित्यत्र अव्याप्तिरपसर्पतु किन्तु ''संयोगी सत्त्वादि''त्यत्र अतिव्यातिराविर्भवति। तथाहि-सत्ताधिकरणे गुणे वर्तमान: योयं संयोगाभाव: तस्य स्वप्रतियोगिन: संयोगस्य अधिकरणे वृक्षादौ वृत्तित्वमेवास्ति न त्ववृत्तित्वम्। अवच्छेदकभेदेन एकस्मिन्नेवाधिकरणे अव्याप्यवृत्तिमत: संयोगस्य तदभावस्य च वर्तमानत्वात्। एवञ्च संयोगाभावस्य लक्षणाघटकतया घटाभावादिरेव लक्षणघटको भवेत्। तदीयप्रतियोगितावच्छेदकं घटत्वादि, तदनवच्छेदकं साध्यतावच्छेदकं संयोगत्वं तदवच्छिन्न: साध्यं: संयोग:, तत्सामानाधिकरण्यं सत्तायामसद्धेतौ इति तत्र सुस्पष्टमेवातिव्याप्तिराभाति।

तथा चाऽयं निष्कर्ष:- अभावे निवेश्यमानस्य प्रतियोगिवैयधिकरण्यमित्यस्य प्रतियोग्यनधिकरण-वृत्तित्वमित्येवमर्थकरणे कपिसंयोगी एतत्वृक्षत्वादित्यत्र अव्याप्ति:। तद्वारणाय प्रतियोग्यधिकरणावृत्ति-त्वमित्येवमर्थकरणे तु संयोगी सत्त्वादित्यत्र अतिव्याप्तिरापततीति उभयत: पाशारज्जु: भवन्तमालिङ्गतीति चेखिद्याते चेतो मदीयम् इति।

खेदममुं परिहर्तुम् अनुष्ठीयतां कश्चन प्रयास:-उपायान्वेषणे सर्वतो विसारि यश: तर्कचणानां विद्वदग्रेसराणां, धीमदग्रणीनां विद्वद्धौयाणां प्रसरतीति गृह्यताम् एष परिष्कार:—

---

१. प्रतियोग्यसामानाधिकरण्यं च प्रतियोगितावच्छेदकावच्छिन्नासामानाधिकरण्यम्, सिद्धान्तलक्षणम्, पृ. ६७

२. अयं कपिसंयोगी एतद्वृक्षत्वात् इत्यादिसङ्ग्रहायासमानाधिकरणान्तम्, सिद्धान्त-लक्षणम्, पृ. ५९

३. हेतुतावच्छेदकसमवायसम्बन्धेन सत्ता द्रव्यवत् गुणे क्रियायां च विद्यते किन्तु द्रव्यातिरिक्ते गुणे क्रियायां वा संयोग: समवायेन न तिष्ठतीति असद्धेतुस्थलमिदम्।

प्रतियोगिव्यधिकरणहेतुसमानाधिकरणात्यन्ताभावेति अभावान्तपदस्य स्वप्रतियोग्यनधिकरण-वृत्तित्वविशिष्टो यो हेतुः तदधिकरणवृत्त्यभाव इत्यर्थः[1]। तथा च कपिसंयोगी एतद्वृक्षत्वात् इत्यत्र कपिसंयोगाभावो न लक्षणघटकः, स्वप्रतियोगि-कपिसंयोगानधिकरण-गुणवृत्तित्ववैशिष्टस्य हेतौ एतद्वृक्षत्वे अभावात्।

''संयोगी'' सत्वात् इत्यत्र तु संयोगाभावो लक्षणघटकः, स्वप्रतियोगि-संयोगानधिकरणगुणवृत्ति-त्ववैशिष्ट्यस्य सत्त्वहेतौ वर्तमानतया तदधिकरणगुणनिरूपितवृत्त्यभावात्मकत्वात्। एवञ्च नोक्ताऽव्याप्तिः न वाऽतिव्याप्तिः। ततश्च स्वप्रतियोग्यनधिकरणवृत्तित्वविशिष्टहेत्वधिकरणवृत्त्यभावीयप्रतियोगितानवच्छेदकं यत् साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिरिति व्याप्तेः सिद्धान्तलक्षणं संगच्छते।

---

१. अयं कपिसंयोगी एतद्वृक्षत्वादिसङ्ग्रहायासमानाधिकरणान्तम्, सिद्धान्तलक्षणम्, दीधिति, पृ. ५९

# श्रवणविधिविचारः

**डॉ० सतीशः के. एस्.**

परमपुरुषार्थभूतं मोक्षं प्रति ब्रह्मात्मैक्यज्ञानं साधनमित्यत्र समेषां वेदान्तवाक्यानां सहमतिर्वर्तते। तत्रैवं सति तादृशात्मज्ञानोपाया अपि तैः प्रतिपादनीयाः प्रतिपादिताश्च– "आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः"[१] आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते सर्वमिदं विज्ञातं भवतीति इत्यादिभिः। एवञ्चात्मदर्शनं प्रति श्रवणमनननिदिध्यासनानि हेतव इति। पुराणेष्वप्ययमर्थस्तथैव प्रतिपादितः, यथा–

**श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः।**
**ज्ञात्वा च सततं ध्येय एते दर्शनहेतवः।।**[२] इति।

तत्रैव तेषां श्रवणादीनामर्थविवरणमपि प्रदर्शितम्। यथा–

**तत्र तावन्मुनिश्रेष्ठाः! श्रवणं नाम केवलम्।**
**उपक्रमादिभिर्लिङ्गैः शक्तितात्पर्यनिर्णयः।।**

**सर्ववेदान्तवाक्यानामाचार्यमुखतः प्रियात्।**
**वाक्यानुग्राहकन्यायशीलनं मननं भेवत्।।**

**निदिध्यासनमैकाग्र्यं श्रवणे मननेऽपि च।**[३] इति।

तत्र श्रवणे विधिरस्ति न वेति इदानीं विचार्यते। यदि विधिरस्ति तर्हि स किं विध इत्यपि विचार्य निर्णीयते।

तिस्रः खलु विधेर्विधाः– अपूर्वविधिर्नियमविधिः परिसङ्ख्याविधिश्चेति। तत्र कालत्रयेऽपि कथमप्यप्राप्तस्य प्राप्तिफलको विधिरपूर्वविधिः। यथा व्रीहीन् प्रोक्षतीति। अत्र व्रीहिषु प्रोक्षणं मानान्तरेणाप्राप्तम्।

---

१. बृहदारण्यकोपनिषद् – २.४.५
२. मानवोपपुराणम्
३. मानवोपपुराणम्

पक्षप्राप्तस्याप्राप्तांशपरिपूरणफलको विधिर्नियमविधिः। यथा "व्रीहीनवहन्ति" इति। अत्र तण्डुलनिष्पत्यर्थं लोकावगतकारणत्वाविशेषात् नखविदलनादेरपि पक्षे प्राप्तिसम्भवात्, अवहननस्य एतत्पक्षेऽप्राप्तस्य परिपूरणं करोत्ययं विधिः।

द्वयोः समच्चित्य प्राप्तयोरेकतरनिवृत्तिफलको विधिः परिसङ्ख्याविधिः। यथा– अग्निचयने– 'इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्ते' इति। अत्र इमामगृभ्णन्निति मन्त्रः अश्वरशनाग्रहणगर्दभरशना-ग्रहणयोरुभयोपि समुच्चित्य प्राप्तः। तत्र गर्दभरशनाग्रहणादस्य निवृत्तिः अनेन 'अश्वाभिधानीमादत्ते' इति विधिना बोध्यते।

एवं विविक्तेषु विधिषु किं विधः श्रवणविधिरिति विचार्यते। तत्र न तावदपूर्वविधिः। वेदान्तश्रवणस्य दृष्टफलं ब्रह्मज्ञानं प्रति साधनत्वस्यान्वयव्यतिरेकाभ्यां सिद्धत्वात्। प्रसिद्धं हि लोके वैद्यशास्त्रश्रवणस्य तद्विषयावगमं प्रति साधनत्वम्। एवञ्च "श्रवणमात्रं श्रोतव्यार्थसाक्षात्कारहेतुः" इति शास्त्रान्तरश्रवणे गृहीतेन नियमेन वेदान्तश्रवणस्य ब्रह्मसाक्षात्कारहेतुत्वे प्राप्ते कथमत्राप्राप्तार्थबोधकोऽपूर्वविधिः।

न च नियमविधिः। नियमादृष्टस्य कल्पकाभावात्। दृष्टान्ते ह्यवघाते नियमादृष्टजन्यपरमापूर्वमेव तत्कल्पकम्। अत्र तु ब्रह्मज्ञानं नादृष्टजन्यम्। किञ्च, दृष्टान्ते तण्डुलनिष्पत्यर्थं प्राप्तेषु नैकेषु साधनेष्वेकत्राघाते नियमः कृतः। इह तु ब्रह्मज्ञानसाधनत्वेन श्रवणमात्रमेकं प्राप्तम्। वस्तुसत्साधनान्तराप्राप्तौ कथं नियमविधिः? तस्मान्नात्र श्रवणे नियमविधिः।

नापि परिसङ्ख्याविधिः। अत्रापि हि वेदान्तश्रवणातिरिक्तं साधनान्तरं समुच्चित्याप्राप्तम्। तस्मान्न परिसङ्ख्याविधिः।

एवञ्च, विधित्रयमपि श्रवणे न सम्भवति। भाष्यकारा अपि समन्वयसूत्रव्यख्यानावसरे विधिं निराकुर्वन्।[१]

किञ्च, यद्यत्र विधिः स्वीक्रियते तर्हि वेदान्तानां विधिपरत्वं ब्रह्मपरत्वं चेति वाक्यभेदप्रसङ्गः। तस्मान्न कोऽपि विधिः श्रवणे–इति पूर्वपक्षः।

'श्रोतव्यः'– इत्यत्र अपूर्वविधिर्भवितुमर्हति। 'वेदान्तश्रवणं ब्रह्मसाक्षात्कारहेतुः' इत्यत्र अन्वयव्यतिरेकप्रमाणं नास्ति। लोके कृतेऽपि श्रवणे बहुशस्तदलाभात्, अकृतश्रवणस्यापि वामदेवस्य गर्भगतस्य ब्रह्मज्ञानोत्पत्तेः।

---

१. किमर्थानि तर्हि आत्मा वाऽरे द्रष्टव्यः श्रोतव्य इत्यादीनि विधिच्छायानि वाक्यानि? स्वाभाविकप्रवृत्तिविमुखीकरणार्थानीति ब्रूमः। –ब्रह्मसूत्रं शाङ्करभाष्यम् - १.१.४

यदुक्तं पूर्वपक्षिणा 'श्रवणमात्रं श्रोतव्यार्थसाक्षात्कारहेतुः' इति शास्त्रान्तरश्रवणगृहीतः सामान्यनियमोऽस्ति-इति, तदयुक्तम्। कर्मकाण्डश्रवणात् तदर्थधर्मादिसाक्षात्कारादर्शनात् नियमस्य व्यभिचारः। तस्मादत्रापूर्वविधिः। भाष्येऽपि सहकार्यन्तरविध्यधिकरणे[१] 'विद्यासहकारिणो मौनस्य बाल्यपाण्डि-त्यवद्विधिरेवाश्रयितव्यः, अपूर्वत्वात्'- इति पाण्डित्यशब्दिते श्रवणे अपूर्वविधिरेवाभ्युपगतः- इति **प्रकटार्थकारादयः** केचित्।

**विरणानुगास्त्वाहुः**

दृष्टफलस्यापि धर्मज्ञानस्य साधनेऽध्ययने नियमविधिस्तावदङ्गीकृत एव। अनित्यपुरुषार्थे परोक्षे धर्मज्ञानेऽपि यद्येवं विधिः स्वीक्रियते, तदा परमपुरुषार्थब्रह्मसाक्षात्कारसाधने नियमविध्यङ्गीकारे का हानिः? यद्यध्ययने नियमादृष्टजन्यं यागीयापूर्वं तत्कल्पकं स्यात्, तर्हि श्रवणेऽपि ब्रह्मज्ञानं तत्कल्पकमस्तु। एतेन श्रवणे नियमादृष्टस्य कल्पकं नास्तीति पूर्वपक्ष्युक्तं परास्तम्। ब्रह्मज्ञानस्य सर्वादृष्टजन्यत्वाभ्युपगमात्। "सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते"[२] इति स्मरणात्। अत्र सर्वशब्देन प्रसिद्धयागादीनां ग्रहणं भवति, तथा 'अखिलशब्देन' श्रवणादेर्ग्रहणम्। अन्यथा पुनरुक्तिदोषप्रसङ्गात्।

यदि तत्र वेदाध्ययने-

**योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम्।**
**स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः॥**[३]

इत्यकरणे प्रत्यवायमपेक्ष्य विधिरङ्गीकृतः, प्रकृते श्रवणे तु कथमित्युच्यते, तर्ह्यत्रापि-

**नित्यं कर्म परित्यज्य वेदान्तश्रवणं विना।**
**वर्तमानस्तु संन्यासी पतत्येव न संशयः।।**

इति श्रवणेऽप्यकरणे प्रत्यवायस्मरणान्नियमविधिः।

यत्तूक्तं वस्तुसत्साधनान्तरप्राप्तावेव नियमविधिरिति, तदेतदसारम्। यत्र साधनान्तरतया सम्भाव्यमानस्य पक्षे प्राप्त्या विधित्सितसाधनस्य पाक्षिक्यप्राप्तिर्निवारयितुं न शक्यते, तत्रापि नियम- विधिर्भवति। प्रकृते साधनान्तरतया सम्भाव्यमानान्यग्रे निरूपयिष्यैन्ते।

वस्तुतस्तु, नियमविधिदृष्टान्ते 'व्रीहीनवहन्ति' इत्यत्र शास्त्रैकगम्यापूर्वीयव्रीहिषु प्रमाणान्तरेण नखविदलनाद्यप्राप्तावप्यवघाते नियमः स्वीकृतः। तद्वदत्रापि साधनान्तराप्राप्तावपि नियमोऽस्तु। यद्युच्येत,

१. ब्रह्मसूत्रशाङ्करभाष्यम् - ३.४.४७
२. श्रीमद्भगवद्गीता - ४.३३
३. मनुस्मृतिः - २.१६८

व्रीहिमात्रसाधारणाकारेण प्राप्तिमपेक्ष्य तत्र नियम इति तर्हि विषयज्ञानमात्रसाधरणाकारेणात्रापि नियम इति समानम्। अथावघातेऽपूर्वविधिरेव सन् फलतो नियमविधिरिति व्यवह्रियते तत्रेति चेत् श्रवणेऽपि तथा भविष्यति। तस्मान्नियमविधिरेवायम्।

अपूर्वविधिप्रतिपादकैर्यदुक्तं वेदान्तश्रवणस्य ब्रह्मसाक्षात्कारहेतुत्वाङ्गीकारे अन्वयव्यतिरेकव्यभिचारौ स्त इति तदपि परिह्रियते। कृतश्रवणस्य ब्रह्मसाक्षात्कारानुदये सहकारिवैकल्यं कारणम्। अतो नान्वयव्यभिचारः गर्भगतवामदेवादीनां जन्मान्तरश्रवणात् फलसम्भवेन न व्यतिरेकव्यभिचारः। किञ्च, एतद्दोषापादकैरप्येवमेवेदं परिहर्तव्यमन्यथा, विधितो ज्ञाते कार्यकारणभावेऽप्ययं दोषः समानः स्यात्। तथा च प्राप्तत्वान्नापूर्वविधिः।

भाष्येऽपि– 'आवृत्तिरसकृदुपदेशात्'[१] इत्यधिकाणे दर्शनपर्यवसानानि हि श्रवणादीन्यावर्त्यमानानि दृष्टार्थानि भवन्ति, यथाऽवघातादीनि तण्डुलनिष्पत्तिपर्यवसानानि"[२]। इति श्रवणस्य ब्रह्मदर्शनार्थस्य दृष्टार्थतया दार्शपूर्णमासिकावघातन्यायप्राप्तावावृत्युपदेशः। अपूर्वविधित्वे तु स न सङ्गच्छते।

इदानीमात्मसाक्षात्कारे साधनान्तरत्वेन सम्भाव्यमानानां निरूपणं क्रियते, येषां पाक्षिकप्राप्त्या वेदन्तश्रवणमप्राप्तं स्यात्।

(१) किञ्चिद्वस्तु केनचिच्चक्षुषा वीक्षितं, तत्रैव चान्यैः कथितस्य स्वागृहीस्य किञ्चिद्विशेषान्तरस्यावगमाय पुनः सप्रणिधानं चक्षुर्व्यापारे प्रवर्तते, तद्वत् मनसा अहमिति गृह्यमाणे जीवेऽध्ययनगृहीतैर्वेदान्तैरुपदिष्टं निर्विशेषब्रह्मचैतन्यरूपत्वमाकर्ण्य, तदवगमाय पुनः सप्रणिधानं मानसव्यापारे प्रवर्तते, तत्पक्षे वेदान्तश्रवणमप्राप्तं स्यात्।

(२) 'जुष्टं यदापश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः' इत्यादिश्रवणत् भिन्नात्मज्ञानान्मुक्तिरिति भ्रमसम्भवेन मुक्तिसाधनज्ञानाय भिन्नात्मविचाररूपे शास्त्रान्तरश्रवणे प्रवृत्तौ अद्वैतात्मपरवेदान्तश्रवणं पक्षेऽप्राप्तं स्यात्।

(३) स्वप्रयत्नसाध्यादपि वेदान्तविचारात् सत्तानिश्चयरूपं ब्रह्मज्ञानं भवत्येव। किन्तु गुरुमुखाधीनवेदान्तश्रवणजन्यनियमादृष्टमेव कल्मषनिरासद्वारा अविद्यानिवृत्तावुपयुज्यते, इति, अस्य पक्षेऽप्राप्तौ नियमविधिः। लिखितपाठादिना स्वप्रयत्नसाध्येन वेदान्तवाक्यविचारेणोत्पन्नमपि ज्ञानं नियमादृष्टाभावादविद्यामनिवर्तयत् प्रतिबद्धमिव तिष्ठति। तस्मात् गुरुमुखाधीनश्रवणनियमविधिः।

(४) अद्वैतात्मपरभाषाप्रबन्धश्रवणस्य पक्षे प्राप्त्या वेदान्तश्रवणे पूर्ववन्नियमविधिरयम्।

---

१. ब्रह्मसूत्रम् – ४.१.१

२. ब्रह्मसूत्रशाङ्करभाष्यम् – ४.१.१

(५) मन्त्रार्थस्मृत्यर्थं मन्त्रमूलकल्पसूत्रात्मीयग्रहणकवाक्यदीनामपि पक्षे प्राप्ते मन्त्रैरेव मन्त्रार्थस्मृतिस्साध्या[१] इति यथा नियमः, तथा वेदान्तमूलेतिहासपुराणपौरुषेयप्रबन्धानामपि पक्षे प्राप्तिसम्भवान्नि-यमोऽयमस्तु। तथा च-

श्रोतव्य' इत्यत्र वेदान्तश्रवणे नियमविधिरेवेति।।

**वार्तिकानुसारिणस्त्वत्र** परिसङ्ख्याविधिं प्रतिपादयन्ति। तथाहि-

यद्यप्यत्र ब्रह्मज्ञानं प्रति श्रवणव्यतिरिक्तं किञ्चित् समुच्चित्य न प्राप्तम्, तथापि श्रवणप्रतिबन्धकव्यापारसामान्यनिवृत्यर्थोऽयं विधिर्भवितुमर्हति। यथा चिकित्साज्ञानार्थं चरकसुश्रुतादिश्रवणे प्रवृत्तस्य मध्ये व्यापारान्तरेऽपि प्रवृतिः प्रसज्यत इति, तत्र तस्मात् निवृत्तिरिष्यते, एवमत्रापि वेदान्तश्रवणे तदतिरिक्तव्यापारेभ्यो निवृत्तिफलकः श्रोतव्य इति विधिः। 'ब्रह्मसंस्थोऽमृतत्वमेति'[२] इत्यत्रानन्यव्यापारत्वस्य मुक्त्युपायत्वोपदेशात्, 'तमेवैकं जानथ अन्या वाचो विमुञ्चथ' इति स्पष्टमेव व्यापारान्तरप्रतिषेधदर्शनाच्चात्रापि परिसंङ्ख्यविधिः शक्यते स्वीकर्तुम्। 'आसुप्तेरामृतेः कालं नयेद्वेदान्तचिन्तया' इत्यादिस्मृतेश्च॥ तस्मात् परिसङ्ख्याविधिरेवायमिति॥

यदुक्तं-भाष्यकारैः समन्वयसूत्रव्याख्याने विधिर्निराकृत इति, तत्रोच्यते-

भाष्ये दर्शनविधिरेव निराकृतो न तु श्रवणविधिः। अन्यथा सहकार्यन्तराधिकरणे बाल्यपाण्डित्यवत् मौनविधिस्वीकारे व्याघातः स्यात्। 'द्रष्टव्यः .........' इत्यत्र दर्शनविधिस्वीकारे, 'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः प्राधान्येन' इति न्यायेन प्रत्ययार्थस्य नियोगस्यैव प्राधान्यात्, दर्शनस्य प्रकृत्यर्थतया गौणत्वात्, तद्विशेषणस्य ब्रह्मणोऽपि सुतरां गुणभावः स्यात्। अतस्तत्र विधिर्निराकृतः। फलत्वेन प्रधानं ब्रह्मोद्दिश्य श्रवणविधाने तु न काप्यनुपपत्तिः।

वेदान्तानां ब्रह्मपरत्वं विधिपरत्वञ्चेत्यभ्युपगमे वाक्यभेदः स्यादिति य आक्षेप उद्भावितः स इदानीं परिह्रयते-

वाक्यभेदः किं सिद्धान्तैकदेशिना आपाद्यते, किं वा भाट्टेन उत प्राभाकरेण वा? नाद्यः, 'विविदिषन्ति यज्ञेन' इत्यत्र ज्ञानसाधनत्वेन सिद्धान्तेऽपि यज्ञादिविध्यङ्गीकारात्। तत्र हि यज्ञादीनां स्वर्गादिसाधनत्वं ज्ञानसाधनत्वञ्चेति वाक्यभेदो दुर्वारः। तथापि तत्र विधिरादृतः, अपूर्वत्वात्। न द्वितीयः, प्रेताग्निहोत्रप्रकाणे 'अघस्तात् समिधं धारयन्ननुद्रवेत्' इत्यधोधारणं विधाय 'उपरि हि देवेभ्यो धारयति' इति पठितम्। तत्र दैविकमुपरिधाारणमन्यप्रकरणे अश्रुतमपि विधेयमपूर्वत्वात् इति 'विधिस्तु

१. जैमिनिसूत्रम् - १.२४
२. छान्दोग्योपनिषद् - २.२३.१

धारणेऽपूर्वत्वात्' इत्यधिकरणे[१] निर्णीतम्। तद्वत् श्रवणेऽपि नियमादृष्टद्वारा ब्रह्मज्ञानजनकत्वस्य अपूर्वत्वात् वाक्यभेदेऽपि श्रवणं विधीयताम्।

न तृतीयः, दर्शपूर्णमासप्रकरणे "तिस्रो रात्रीर्व्रतञ्चरेत्" इति रजस्वलाया व्रतकलापविधिः स्वीकृत एव। तत्र तथा अन्यप्रकरणे अन्यस्य विधिः वाक्यभेददोषमुपेक्ष्य स्वीकृतस्तद्वदत्रापि ब्रह्मप्रकरणे श्रवणविधिस्वीकारे का हानिः स्यात्?

किञ्च, 'तद्विजिज्ञासस्व' इति समानप्रकरणेषु श्रत्यन्तरेषु श्रवणस्य वाक्यभेदेन विधेरवश्याङ्गीकर्तव्यतया पूर्वपक्ष्यपरितोषस्य विरवकाशत्वात्। एवं प्रकारेण श्रवणे विधिरस्तीति सिद्धम्।

**भामतीकारास्तु** श्रवणे विधिं नाङ्गीकुर्वन्ति। तेषां मते श्रवणं नामागमाचार्योपदशजन्यमात्मज्ञानमेव, न तु तात्पर्यविचाररूपम्। तस्मात् ज्ञाने विध्ययोगात् ज्ञानरूपे श्रवणेऽपि न विधिरिति तेषामभिप्रायः। किन्तु तेषामयमभिप्रायः नादर्तव्यः। यतो हि श्रुत्युक्तस्य श्रवणस्य पुराणेन स्वयं व्याख्यानं कृतं यत्– "उपक्रमादिभिलिङ्गैः शक्तितात्पर्यनिर्णयः" इति। अतः तात्पर्यनिर्णयानुकूलव्यापार एव श्रवणमित्येव साधुः। तथा च विधिः शक्यते एव।

किञ्च, भामतीकाराणां मतं यत्– यदि तात्पर्यविचाररूपं श्रवणं स्यात् तर्हि तत्फलं प्रतिबन्धकनिरासो ब्रह्मावगमो वा लोकत एव प्राप्तम्। साधानान्तरं च समुच्चित्य विकल्प्य वा न प्राप्तं, तस्मान्न विधिः– इत्येतदपि न समीचीनमिव। एतद्दोषपरिहारस्य पूर्वमेवोक्तत्वात्। तस्मात् श्रवणविधिरयमादर्तव्य एवेति शम्।।

---

१. जैमिनिसूत्रम् - ३.४.५

# महाभारते महाभूतानां स्वरूपम्

डॉ. महेशप्रसादसिलोड़ी

**कपिलर्षिभगवतः सर्वभूतस्य वै द्विजः।**
**विष्णोरंशो जगन्मोहनाशायोर्वीमुपागतः॥ वि.पु. - २.१३.४८**

वेदेषूपनिषत्सु बौद्धदर्शने स्मृतीतिहासपुराणमहाभारतादिषु च सांख्यदर्शनस्योल्लेखः प्राशस्त्येन विलोक्यते, अस्मिन्नेव क्रमे सांख्यशास्त्रं महाभारते विभिन्नेषु पर्वष तत्त्वक्रमेषु पञ्चमहाभूतानां स्वरूपं तेषां कार्याणि दृग्गोचराणि भवन्ति। तेषां निबन्धनं मयाऽत्र स्वकीये लघुशोधपत्रे क्रियते तद्यथा महाभारते शान्तिपर्वणि त्र्यशीत्यधिकशततमेऽध्याये तृतीयचतुर्थश्लोकयोः महाभूतानां स्वरूपं प्रतिपादितं तच्चेत्थम्।

[1]सर्गप्रारम्भकाले मानसाख्यः प्रजापतिः देवो ब्रह्मा मनस एव विविधप्रजावर्गमसृजत्। तत्र प्राणिनां संरक्षणार्थं सर्वतः पूर्वं जलस्य सृष्टिमकरोत्[2] ताः आपः सर्वभूतानां प्राणाः सन्ति। तस्मादेव प्रजाः वर्धन्ते। जलाभावे प्राणिनः नश्यन्ति। तेनैवेदं सर्वजगदावृतम्। पृथिवी, पर्वताः, मेघाः, अन्ये च ये मूर्तिमन्तः पदार्थाः सन्ति। तत्सर्वं जलमयमेव बोद्धव्यम्। यतः सर्वे अप्सु स्थिता एवं स्वकीय-स्थितिं लभन्ते।[3]

इत्थं महाभूतसृष्टिक्रमे प्रथमतो जलस्याविर्भावः स्वीक्रियते। जलमेव सर्वभूतानां प्राणोऽपि कथ्यते। यतः जलाभावे प्राणिनो नश्यन्ति। जलेनैव सर्वजगदावृतम्। अत्रेदमपि स्वीक्रियते, यज्जगति यानि कानिचिदपि वस्तूनि वर्तन्ते तानि सर्वाणि जलाश्रितानि सन्ति। इत्थमिह महाभूतक्रमे जलस्वरूपं प्रतिपादितमस्ति। पञ्चविंशतितत्त्वेषु जलतत्त्वमपि भवत्येवेति। साङ्ख्यमिहास्माभिः स्वीक्रियते।

---

१. यत् प्राणः सर्वभूतानां वर्धन्ते येन च प्रजाः। म.भा.शा.प.अ. १८३
परित्यक्ताश्च नश्यन्ति तेनेदं सर्वमावृतम्॥३

२. पृथिवी पर्वता मेघा मूर्तिमन्तश्च ये परे।
सर्वं तद् वारुणं ज्ञेयमापस्तस्तम्भिरे यतः॥४

३. पुरा स्तिमितमाकाशमनन्तमचलोपमम्।
नष्टचन्द्रार्कपवनं प्रसुप्तमिव सम्बभौ॥ म.भा.शा. १८३-९

पूर्वकाले अनन्तऽऽकाशः पर्वतसदृशो निश्चल आसीत्। तस्मिन्नाऽऽकाशे चन्द्रार्कादयः केऽपि नैव दृश्यन्ते स्म। स ह्याकाशः सुप्त इव प्रतिभाति स्म।

तस्मादाकाशात् सलिलमुत्पन्नमभूत्। यथा एकस्मिन् घनान्धकारेः तम इव आविर्भूतः। जलप्रभावादेव वायुरुदतिष्ठत्।[१] यथा किमपि अच्छिद्रं पात्रं निःशब्दं लक्ष्यते, परन्तु यदा तस्मिन् छिद्रं कृत्वा वारि परिपूर्यते तदा वायुः तत्र शब्दं प्रकटयति।[२]

वारिणाऽऽकाशप्रान्तमेतावदवरुद्धं यदत्र किञ्चिदवयवकाशो नैवासीत्, तदा तस्य ह्येकार्णावस्य तलं भित्वा भीष्मेन शब्देन सह वायुः प्रादुरभूत्।[३] इत्थं समुद्रजलसमुदायेन प्रकटितो वायुः विचरति। एवं ह्याकाशे कस्मिंश्चिदपि स्थाने वायुः शान्तिन्नेवाह्यगच्छत। वाय्यम्बुनो संघर्षेण दीप्त तेजः महाबलो ह्यग्निदेवः प्रादुरभूत्।

पवनसहयोगेनाग्निः जलं एव समाक्षिपते। पुनः तदेव जलं ह्यग्निमरुतोः संयोगम्प्रत्यपद्यते।[४]। तस्य याऽऽद्रता ह्याकाशे निपतिता, सैव घनीमूता महीरूपेण परिणताऽभूत्।[५]

इयं पृथिवी सर्वरसानां, गन्धानां, प्राणिनां च कारणभूतेति बोद्धव्यम् एतदेव सर्वं प्रसूयते।[६]

इत्यत्र सृष्टयादिमहाभूतक्रमे प्रथमं हयाकाशस्वरूपं दृश्यते। आकाशात् जलोत्पत्तिः स्वीक्रियते। पुनः सलिलात् मरुतः समुत्पद्यन्ते।[७] क्रमशो वायुजलयोः संघर्षणेन अग्निदेवः प्रकटीभवति। अस्योऽर्ध्वगतिः

१. ततः सलिलमुत्पन्नं तमसीवापरं तमः।
तस्माच्च सलिलोत्पीडादुदतिष्ठत मारुतः॥१०

२. यथा भाजनमच्छिद्रं निःशब्दमिव लक्ष्यते।
तच्चाम्भसा पूर्यमाणं सशब्दं कुरुतेऽनिलः॥११

३. तथासलिलसंरुद्दे नभसोऽन्ते निरन्तरे।
भित्वार्णवतलं वायुः समुत्पतति घोषवान्॥१२
ए एष चरते वायुरर्णवोत्पीडसम्भवः।
आकाशस्थानमासाद्य प्रशान्तिं नाधिगच्छति॥१३
तस्मिन् वाट्टवम्बुसघर्षे दीप्ततेजा महाबलः।
पादुरभूदूर्ध्वशिखः कृत्वा निस्तिमिरं नभः॥१४

४. अग्निः पवनसंयुक्तः खं समाक्षिपते जलम्।
सोऽग्निमारुतसंयोगाद् घनत्वमुपपद्यते॥१५

५. तस्याकाशे निपतितः स्नेहस्तिष्ठति योऽपरः।
स संघातत्वमापन्नो भूमित्वमनुगच्छति॥१६

६. रसानां सर्वगन्धानां स्नेहानां प्राणिनां तथा
भूमिर्योनिरिह ज्ञेया यस्यां सर्वं प्रसूयते॥म.भा.शा. १७

७. अमितानां महाशब्दो यान्ति भूतानि सम्भवम्।
ततस्तेषां महाभूतशब्दोऽयमुपपद्यते॥म.भा.शा. १८

वर्तते। पुनः अस्या ह्याकाशजलाग्निवायुना संयोगेन मही प्रादुर्भूता, ये केचिदपि पदार्थाः सन्ति ते सर्वे महीजा वर्तन्ते, इत्थमिह महाभूतक्रमः सम्यक्तया निरूपितो भवतीति।

एतानि पञ्चभूतान्येवनिसीमानि वर्तन्ते। अत एव तैः सह महच्छब्दः प्रयुज्यते। तेभ्य एव भूतानि समुत्पद्यन्ते। अतस्तेषाङ्कृते महाभूतशब्दस्य प्रयोगः सुसङ्गोस्ति। प्राणिनां देहाः पञ्चभूतात्मकाः सन्ति। एतेषु याश्चेष्टाः गतश्च वर्तन्ते। ताः सर्वाश्चापि भागत्वेन स्वीक्रियते। या शून्यताऽस्ति सा गमनाशंभूता उष्माग्नेरंशोऽस्ति। रक्तादिकाः द्रवपदार्थाः जलांशाः वर्तन्ते।[1] इत्थमेवास्थिमांसादिकाः घनीभूताः पदार्थाः पृथिव्या अंशाः सन्ति। इत्थमेव सर्वमपि स्थावरजडात्मकं पञ्चभूतमयमस्ति। एतेषामेव सूक्ष्मांशाः श्रोत्रं, घ्राणं, रसना, त्वक्, नेत्रञ्चेति पञ्चेन्द्रियनाम्ना प्रोच्यते।[2]

इत्थमिह पञ्चमहाभूतानां स्वरूपाणि शरीरेण सह नैकेषु स्वरूपेषु निरूप्यन्ते अत एवात्र महाभारतीयं साङ्ख्यमित्यस्माभिः स्वीक्रियते।

महाभारते शान्तिपर्वणि चतुरशीत्यधिकशततमेऽध्याये दशमश्लोकतः समारभ्य द्विचत्वारिंशततमं श्लोकं यावत् महाभूतानां स्वरूपाणि प्रतिपादितानि सन्ति तानि चेत्थम् यद्यपि तरवः घनीभूताः प्रतीयन्ते। तथापि तेष्वाकाशोऽस्ति, नैवात्र संशयः। एतस्मादेव कारणात् तेषु वृक्षेषु पुष्पफलादीनामभिव्यक्तिः भवितुमर्हति।[3] वृक्षाणामन्तः ऊष्मा वर्तते। तस्मादेव पर्णानि, त्वक्, फलानि, पुष्पाणि च म्लायन्ते शीर्यन्ते च। एतेन तेषु स्पर्शोऽपि सिध्यति। इदमपि दृश्यते यदिह[4] वाय्वग्न्वर्द्योष्मभिश्चापि वृक्षाणां फलानि पुष्पाणि शीर्यन्ते। श्रोत्रेणैव शब्दो गृह्यते। तेनेदं सिध्यति यदिमे वृक्षाश्चापि शृण्वन्ति।[5]

वल्ली वृक्षं वेष्टयते, अनवलोक्यकश्चिदपि गमनमार्गं नैव प्राप्नोति। तेन सिध्यति वृक्षाश्चापि पश्यन्तीति।[6] पुण्यापुण्यैः विविधैः गन्धैः धूपैश्च वृक्षा आरोग्यवन्तः सन्तः फलन्ति।[7] तथ्यमिदं प्रमाणयति यत् पादपाश्चापि जिघ्रन्तीति।

---

१. चेष्टा वायुः खमाकाशमूष्माग्निः सलिलं द्रवः।
पृथिवी चात्र संघातः शरीरं पाञ्चभौतिकम्॥४

२. इत्यैतैः पञ्चभिर्भूतैर्युक्तं स्थावरजङ्गमम्।
श्रोत्रं घ्राणं रसः स्पर्शो दृष्टिश्चेन्द्रियसंज्ञिताः॥५

३. घनानामपि वृक्षाणामाकाशोऽस्ति न संशयः।
तेषां पुष्पफलव्यक्तिर्नित्यं समुपपद्यते॥म.भा.शा.प.अ. १८४-१०

४. उष्मतो म्लायते पर्णं त्वक् फलं पुष्पमेव च।
म्लायते शीर्यतेचापि स्पर्शस्तेनात्र विद्यते॥११

५. वाय्यग्न्यशनिनिर्घोषेः फलं पुष्पं विशीर्यते।
श्रोत्रेण गृहयते शब्दस्तस्माच्छृण्वन्ति पादपाः॥१२

६. वल्ली वेष्टयते वृक्षं सर्वतश्चैव गच्छति।
न ह्यदृष्टेश्च मार्गोऽस्ति तस्मात् पश्यन्ति पादपाः॥१३

७. पुण्यापुण्यैस्तथा गन्धैर्धूपैश्च विविधैरपि।
आरोगाः पुष्पिताः सन्ति तस्माज्जिघ्रन्ति पादपाः॥१४

वृक्षाः मूलैः जलानि पिबन्ति, तेषु व्याधयोऽपि दृश्यन्ते।[१] औषधमूलेषु निपात्य व्याधिनिवारणञ्चापि क्रियते। तेन सिध्यति यदिह वृक्षे रसनेन्द्रियाणि वर्तन्तेति।[२] यथा मानवः पद्मनालेन जलमूर्ध्वमाकर्षति तथैव पवनसाहाय्येन पादपः स्वमूलेन यज्जलं पिबति तज्जलं तस्मिन्नेवाग्निमरुतौ पचतः आहार परिपाकेन वृक्षे स्निग्धता भवति। तस्य वृद्धिश्च जायते।[३] सर्वेषां जङ्गमानां शरीरेषु पञ्चमहाभूतानि विद्यमानानि सन्ति। परन्तु तत्र तेषां स्वरूपेषु भेदोपलब्धिर्जायते। तेषां पञ्चमहाभूतानां सहयोगेनैव शरीरं चेष्टाशीलं भवति।

देहे त्वक्, मांसम्, अस्थि, मज्जा, स्नायुश्चैतेषां पञ्चवस्तूनां संघात एव पृथिवीमयोऽस्ति।[४] तेजः क्रोधश्चक्षुरुष्मा जठरानलश्चैतानि वस्तूनि शरीरे ह्यग्निमयानि वर्तन्ते।[५] श्रोत्रं, घ्राणं, मुखं, हृदयं उदरश्चैते प्राणिनां शरीरेषु पञ्चधातवः आकाशात् समुत्पद्यन्ते[६] श्लैष्मा, पित्तं, स्वेदो, वसा, शोणितञ्चैते पञ्च प्राणिनां शरीरेषु जलस्वरूपात्मकतया सन्ति।

प्राणी प्राणैः प्राणिति। व्यानेन ब्यायच्छते। अपानवायुः उर्ध्वतोऽधो गच्छति। समानवायुः हृद्यवस्थितो भवति।[७] उदानवायुना पुरुषः उच्छ्वसिति। कण्ठताल्वादिस्थानभेदैः शब्दाक्षराणामुच्चारणं करोति। इत्थमेते पञ्चवायूनां परिणामाः सन्ति।[८] ये शरीरवन्तं चेष्टामयं कुर्वन्ति। जीवो भूमेर्गन्धगुणननुभवति।[९]

---

१. पादैः सलिलपानाच्च व्याधीनां चापि दर्शनात्।
व्याधि प्रतिक्रियत्वाच्च विद्यते रसनं द्रुमे॥१५

२. वक्त्रेणोत्पलनालेन यथोर्ध्वं जलमाददेत्।
तथा पवनसंयुक्तः पादैः पिबति पादपः॥१६

३. सुखदुःखयोश्च ग्रहणाच्छिन्नस्य च विरोहणात्।
जीवं पश्यामि वृक्षाणामचैतन्यं न विद्यते॥१७

४. तेन तज्जलमादत्तं जरयत्यग्निमारूतौ।
आहारपरिणामाच्च स्नेहो वृद्धिश्च जायते॥१८

५. जङ्गमानां च सर्वेषां शरीरे पञ्चधातवः।
प्रत्येकशः प्रभिद्यन्ते, यैः शरीरं विचेष्टते॥१९

६. त्वक् च मांसं तथास्थीनि मज्जा स्नायुश्च पञ्चमम्।
इत्येतदिह संघातं शरीरे पृथिवीमयम्॥२०
तेजो, ह्यग्निस्तथा क्रोधश्चक्षुरुष्मा तथैव च।
अग्निर्जरयते यश्च पञ्चाग्नेयाः शरीरिणः॥२१

७. प्राणात् प्रणीयते प्राणी व्यानाद् व्यायच्छते तथा।
गच्छत्यपानोऽधश्चैव समानो हृद्यवस्थितः॥२४

८. उदानादुच्छ्वसिति च प्रतिभेदाच्च भाषते।
इत्येते वायवः पञ्च चेष्टयन्तीह देहिनम्॥२५

९. भूमेर्गन्धगुणान् वेति रसं चाद्भ्यः शरीरवान्।
ज्योतिषा चक्षुषा रूपं स्पर्शं वेत्ति च वाहिना॥२६

शरीरवान् पुरुषः रसनेन्द्रियेण रसमास्वादयति। ज्योतिर्मयेन चक्षुषा रूपं ज्ञायते। वायुसम्बन्धिना त्वगिन्द्रियेण च स्पर्शज्ञानं भवति। गन्धः स्पर्शः रसः, रूपं, शब्दश्चैते पृथिव्याः गुणा मन्यन्ते, एतेषु श्रेष्ठो गन्धगुणो वर्ण्यते।[१]

इष्टगन्धोऽनिष्टगन्धो, मधुरगन्धो, कटुगन्धो, निर्हारिगन्धः, संहतगन्धः, स्निग्धगन्धो रुक्षगन्धो, विराड्गन्धश्चेति नवभेदाः गन्धस्य ज्ञायन्ते। इत्थं पार्थिवो गन्धो विस्तीर्यते।[२]

मानवः द्वाभ्यां नेत्राभ्यां रूपं पश्यति। एवञ्च त्वगिन्द्रियेण रसमनुभवति। शब्दः स्पर्शः, रूपं रसश्चेति जलस्य गुणाः स्वीक्रियन्ते, तेषु प्रधानतमः रसो गुणः वर्तते। तज्ज्ञानाय तस्य भेदानां वर्णनमस्ति। ऋषिभिः रसभेदः बहुविधः स्वीक्रियते।[३]

मधुरो लवणस्तिक्तः कषायोऽम्लः कटुश्चैत्येवं षड्रूपेषु विस्तारितः। रसो जलमयः स्वीक्रियते। शब्दः स्पर्शः रूपञ्चैति अनलस्य त्रयो गुणाः स्वीक्रियन्ते। ज्योतिर्मयं रूपं पश्यति। अनलस्य प्रधानगुणो रूपमपि नैकविधं मन्यते।[४]

ह्रस्वो, दीर्घः, स्थूलश्चतुस्रो वर्तुलः शुक्लः कृष्णो रक्तः पीतः, गगनमिव नीलः कठिनश्चिक्कणः श्लक्ष्णो, पिच्छिलो, मृदुः दारुणेश्चेत्येवं ज्योतिर्मयस्य रूपस्य गुणाः षोडशसङ्ख्याकाः परिदृश्यन्ते।[५]

वायुः द्विगुणः विज्ञेयः तस्य गुणे शब्दस्पर्शो वायोः प्रधानगुणस्तु स्पर्शो वर्तते। योऽत्र बहुविधः स्वीक्रियते।[६] उष्णः शीतः, सुखात्मको दुःखात्मकः, स्निग्धो, विशदः, खरो, मधुरो, रुक्षो, लघुगुरुः गुरुतरश्चेति वायुसम्बन्धिनः स्पर्शगुणस्य द्वादशभेदाः प्रोच्यन्ते। अनेकभेदे भिन्ननभसश्चैतन्मात्रगुणः शब्द एव स्वीक्रियते।[७] स शब्दगुणो षड्गो ऋषभः, गान्धारो, मध्यमः पञ्चमो धैवतः निषादश्चेते

---

१ गन्धः स्पर्शो रसो रूपे शब्दश्वाच गुणाः स्मृताः।
तस्य गन्धस्य वक्ष्यामि विस्तराभिहितान् गुणान्॥२७

२. इष्टश्चानिष्टगन्धश्च मधुरः कटुरेव च।
निर्हारी संहतः स्निग्धो रुक्षो विशद एव च॥२८

३. रसो बहुविधः प्रोक्त ऋषिभिः प्रथितात्मभिः।
मधुरो लवणस्तिक्तः कषायोऽम्लः कटुस्तथा॥म.भा.शा. १८४-३

४. एष षड्विधिविस्तारो रसो वारिमयः स्मृतः।
शब्दस्पर्शश्च रूपं च त्रिगुणं ज्योतिरुच्चते॥३०

५. ज्योतिः पश्यति रूपाणि रूपं च बहुधास्मृतम्।
ह्रस्वो दीर्घस्तथा स्थूलश्चतुरस्त्रोऽनुवृत्त्वान्॥३१

६. शुक्लः कृष्णस्तथा रक्तः पीतो नीलारूणस्तथा।
कठिनश्चिक्वणःश्लक्षणः पिच्छिलो मृदुदारूणः॥३२

७. एवं षोडशविस्तारो ज्योतीरूपगुणः स्मृतः।
शब्दस्पर्शो च विज्ञेयो द्विगुणो वायुरित्युत॥३३

ह्याकाशजनितस्य शब्दगुणस्य सप्तभेदाः दृश्यन्ते।[१]

स्वात्मैश्वर्येण शब्दः सर्वत्र व्याप्तोऽस्ति। किन्तु तच्च पटहादिषु अस्य विशेषरूपेणाभिव्यक्तिर्भवति। मृदङ्गभेरी शङ्खमेघ रथादिषु यः शब्दः श्रूयते।[२] जडचेतनयोः कश्चित् शब्दः श्रूयते स सर्वोऽपि सप्तभेदेष्वेव निर्दिश्यते। एतेषु सप्तभेदेष्वन्तर्भावितः।[३]

इत्थमिहाकाशजः शब्दः बहुविधाकारः स्वीक्रियते। वायुगुणैः सह आकाशजः शब्दो भवति। यदा वायुसम्बन्धिनो गुणाः न बाध्यन्ते। शब्देन सह च भवन्ति।[४] तदा मानवः शब्दं शृणोति जानाति च। परन्तु यदा वायुजाः गुणाः प्रतिकूलपवनैः वाधिता सन्तः विषमावस्थायामास्थिताः भवन्ति तदा शब्दग्रहणन्नैव भवति। ते शब्दादीनामुत्पादकाः धातवः पञ्चभिः धातुभिः पोष्यन्ते।[५]

आपोऽग्निर्मारुतश्चेति त्रीणि तत्त्वानि सदैव देहेषु विद्यमानानि भवन्ति। एतान्येव शरीरस्य मूलभूतानि तत्त्वानि सन्ति। एतानि प्राणादीन् व्याप्य शरीरे स्थितानि सन्ति।

इह सर्वेषु स्थावरेषु जङ्गमेषु पञ्चमहाभूतानि व्याप्तानि स्वीक्रियन्ते।[६] यथा घनेषु वृक्षेषु आकाशतत्त्वमस्ति तथैव मरुत्सु उष्णतत्त्वमपि सिद्ध्यति। यस्मात् कारणात् वृक्षाणां फलानि पुष्पाणि च म्लायन्ते शीर्यन्ते च।[७] वृक्षेषु श्रवणादिशक्तिः विद्यते यतः वाय्वग्निविद्युद्घोषैश्च वृक्षाणां पुष्पाणि फलानि च विशीर्यन्ते। प्रकारेणानेन प्रसङ्गेऽत्र पञ्चविंशति तत्वेषु विद्यमानानि पञ्चमहाभूतानि तेषां

---

१. यथा खरो मृदु रुक्षो लघु गुंरुतरोऽपि च।
एवं द्वादशधा स्पर्शो वायव्यो गुण उच्चते॥३५

२. तत्रैकगुणसाकाशं शब्द इत्येव स्मृतम्।
तस्य शब्दस्य वक्षामि विस्तरं विविधात्मकम्॥३६

३. षड्ज ऋषभगान्धारौ मध्यमो धैवतस्तथा।
पञ्चमश्चापि विज्ञेयस्तथा चापि निषादवान्॥३७

४. एष सप्तविधः प्रोक्तो गुण आकाशसम्भवः।
ऐश्वर्येण तु सर्वत्र स्थितोऽपि पटहादिषु॥३८

५. मृदङ्गभेरीशङ्खानां स्तनयित्नो रथस्य च।
य कश्चित् श्रूयते शब्दः प्राणिनोऽप्राणिनोऽपि वा

६. एतेषामेव सर्वेषां विर्षये सम्प्रकीर्तितः॥३९
एवं बहुविधाकारः शब्द आकाशसम्भवः।
आकाशजं शब्दमाहुरेभिर्वायुगुणैः सह॥४०

७. अव्याहतैश्चेतयते न वेत्ति विषमास्थितैः।
आप्याय्यन्ते च ते नित्यं धावतस्तैस्तु धातुभिः॥ ४१

स्वरूपं निर्दिष्टमस्तीति साङ्ख्यमिह चकास्ति तराम्।[१]

महाभारते शान्तिपर्वणि चतुर्नवत्यधिकशततमेऽध्याये पञ्चमलोकतः समारभ्यैकादशश्लोकं यावत् पञ्चमहाभूतानां स्परूपं प्रतिपादितं तच्चेत्थंपृथिवी, वायुराकाशः, जलमग्निश्चैतानि पञ्चमहाभूतानि सर्वेषां प्राणिनामुत्पत्तिः प्रलयस्थानानि सन्ति।[२] यथा वीचयः समुद्रात् प्रकटिता सत्यः पुनः तस्मिन्नैव लीयन्ते, तथैव एतानि पञ्चमहाभूतानि परमात्मनः सकाशात् समुत्पद्यन्ते।[३] अतः तस्मिन्नैव परमात्मनि सर्वप्राणिभिः सह लीयन्ते। यथा कूर्मः स्वान्यङ्गानि प्रसार्य संहरते, तथैव सर्वभूतानि भूतात्मा परम्ब्रह्म परमेश्वर आत्मसृष्टानि सर्वभूतानि विस्तीर्य पुनः स्वात्मनि लयं प्रापयति।[४]

सर्वभूतभृता परमात्मना सर्वप्राणिशरीरेषु पञ्चमहाभूतानि स्थापितानि। परन्तु तेषु वैषम्यमकरोत्।[५] कस्यचिन्महाभूतस्याशोऽधिकः कस्यचिच्चाल्पो वर्तते। तद्वैषम्यं जीवाः न पश्यन्ति। देहिना शब्दगुणाः श्रोत्रेन्द्रियाणि, देहरन्ध्राणि ह्येतानि दृयाकाशजन्यानि वर्तन्ते। स्पर्शः चेष्टा, त्वगिन्द्रियाणि एतानि वायुजन्यानि कार्याणि स्वीक्रियन्ते।[६] रूपं चक्षुः पाकादिषु एतानि तेजसः त्रिविधकार्याणि उच्यन्ते। रसः जिह्वा, क्लेदश्च एते त्रयो जलस्य गुणाः स्वीक्रियन्ते[७] घ्रेयं (गन्धः) घ्राणेन्द्रियं शरीरञ्चैते भूमिगुणाः कार्याणि निगदितानि। अतः अस्मिन् शरीरे पञ्महाभूतानि षष्ठं च मनः स्वीक्रियते।[८]

अनेनैतत् सिद्ध्यति यत् भूतानां देहाः पञ्चमहाभूतात्मकाः वर्तन्ते, यतः शरीरे यानि यानि तत्त्वानि सन्ति, तानि सर्वाणि पञ्चमहाभूतात्मकान्येव स्वीक्रियन्ते। प्रलये एतानि महाभूतानि सर्वप्राणियुक्तानि परमात्मनि लीयन्ते। अयमपि स्वीक्रियते पञ्चमहाभूतानि परमात्मा एव विरचितानि। अत्र महाभूतानां

---

१. आपोऽग्निर्मारूतश्चैव नित्यं जाग्रति देहिषु।
मूलमेते शरीरस्य व्याप्य प्राणानिहस्थिताः॥ ४२

२. पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम्।
महाभूतानि भूतानां सर्वेषां प्रभनवाप्ययौ॥म.भा.शा. १९४-५

३. यतः सृष्टानि तत्रैव तानि यान्ति पुनः पुनः।
महाभूतानि भूतेभ्यः सागरस्योमर्यो यथा॥ ६

४. प्रसार्य च यथाङ्गानि कूर्मः संहरते पुनः।
तद्वद् भूतानि भूतात्मा सृष्टानि हरते पुनः॥ ७

५. महाभूतानि पञ्चैव सर्वभूतेषु भूतवत्।
अकरोत् तेषु वैषम्यं ततु जीवो न पश्यति॥ ८

६. शब्दः श्रोत्रं तथा खानि त्रयमाकाश योनिजम्।
वायोः स्पर्शस्तथा चेष्टात्वक् चैवत्रितयंस्मृतम्॥ ९

७. रूपं चक्षुस्तथा पाकस्त्रिविधं तेज उच्यते।
रसः क्लेदश्च जिहवा च त्रयो जलगुणाः स्मृताः॥ १०

८. घ्रेयं घ्राणं शरीरं च एते भूमिगुणास्त्रयः।
महाभूतानि पञ्चैव षष्ठं च मन उच्यते॥११

तेषां कार्याणां च सांख्यमतानुसारेण गुणलक्षणविवेचनपुरस्सरं तेषां प्राणिदेहनिर्माणे योगदानं च पृथक्-पृथक् प्रतिपादितम् इति।

महाभारते शान्तिपर्वण्येकोनविंशत्यधिकद्विशततमेऽध्याये सप्तमश्लोकतः समारभ्य नवमश्लोकं यावत् महाभूतस्वरूपं प्रतिपादितम् सर्वप्राणिनां शरीरेषूपादानभूताः आकाशवायुरग्निजलपृथिव्यश्चैते पञ्चधातवः विद्यमानाः सन्ति। ते स्वभावतः परस्परं संयुज्यन्ते वियुज्यन्ते च।[1] ह्याकाशः वायुः अग्निः जलं पृथिवी च पञ्चमहाभूतानि। एतेषां समारोणैव विभिन्नप्राणिशरीराणि जायन्ते। इत्यत्र सिद्धो भवति। सर्वभूतशरीरेषु च महाभूतानि विद्‍यमानानि सन्ति[2], तेषां संघातत्वेन शरीरस्योत्पतिर्जायते। अत्र महाभारतीयसांख्यशास्त्रानुसारेण महाभूतेभ्यः समुत्पन्नेन्द्रियाणि विकारादीन्यपि तेभ्यः एव स्वीक्रियन्त इति शम्।[3]

---

१. धातवः पञ्चभूतेषु खं वायुर्ज्योतिषो धरा।
ते स्वभावेन तिष्ठन्ति वियुज्यत्ते स्वभावतः॥७ म.भा.शा. २१९-७

२. आकाशो वायुरुष्या च स्नेहो यश्चापि पार्थिवः।
एष पञ्चसमाहारः शरीरमपि नैकधा॥८ म.भा.शा. २१९-८

३. ज्ञानमूष्मा च वायुश्च त्रिविधः कार्यसंग्रह।
इन्द्रियाणीन्द्रियार्थाश्च स्वभावश्चेतना मनः।
प्राणापानौ विकारश्च धातवश्यात्र निःसृताः॥९ म.भा.शा. २१९-९

# योगे चिकित्साविज्ञानम्

डॉ. रविशङ्करशुक्लः

निरोधो नाम स्वकारणे चित्तलयः, चित्तं नाम महत्तत्त्वं बुद्धिरेवेति, तथा च-'यावतीनां बुद्धिवृत्तीनां सात्विकीनां राजसीनां तामसीना ञ्च प्रमाण-विपर्यय-विकल्प-निद्रास्मृत्यभिधानानां स्वकारणे बुद्धितत्त्वे तावदात्यन्तिको लयः-योग इत्युच्यते। अत्र इदं तत्त्वं बुद्धिसंयोगसत्वेऽपि तत्र ज्ञानाग्निना दग्धबीजं भवति। अद्यावधिः कस्तावदपरो योग इति, स चायं भगवता गीतायामुक्तम्–

**योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनञ्जय।**
**सिद्धसिद्ध्योः समो भूत्वा समत्वं योग उच्यते॥**[1]

"श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला। समाधावचला बुद्धिस्तदा योगमवाप्स्यसि" इति सेयमवस्था मुक्तेः प्राग्भारा। तथा च परमयोगस्य साक्षान्मुक्तिं प्रति हेतुत्वमुपन्यस्तमिति योगाचार्याणां सार्वभौमसिद्धान्तः।

योगदर्शनस्य स्वरूपमुक्तं तद्द्वारा चिकित्साविज्ञानं कथं भवति?

एवम् भूतः यः योगः गीतासु प्रतिपादितः तद् सांख्ययोगद्वारा कथं चिकित्साविज्ञानं सिद्ध्यति? तदुच्यते समानतन्त्रत्वात् ऐक्यं प्रतिपाद्यते। सांख्यदर्शनं सैद्धान्तिकं पक्षमुपस्थापयति योगदर्शनं प्रायोगिकं पक्षमुपस्थापयति च।

इदं पाञ्चभौतिकं शरीरं वातपित्तकफादियुक्तं विद्यते। अस्मिन्नेव शरीरे पिण्डाण्डं ब्रह्माण्डं ऐक्यमितिन्यायात् पुराऽपि देहेऽस्मिन् सम्पूर्णप्रकृतिः निहिताऽस्ति। प्राणिनः वातपित्तकफधातुवैषम्येन नानारोगैः सन्तप्ताः भवन्ति, अधुना दुर्दान्तकाले असंख्यातैः व्याधिभिः आक्रान्ताः सन्ति जनाः। सम्प्रति अत्याधुनिकवैज्ञानिके युगे यानि यानि साधनानि सन्ति, तानि साधन प्रयोगात् उपायानाञ्च अपायानाञ्च वृद्धिर्भवत्येव। साधु साधनेषु ते उपायप्रयोगाः सफलाः भवन्ति, असाधुषु साधनेसु प्रयोगेषु अपायाः विवर्धन्ते। अद्य चिकित्साविज्ञानस्य चरमावधिः विद्यते।

---

१. श्रीमद्भगवद्गीता, अ. २ श्लोक ४८

२. श्रीमद्भगवद्गीता, अ. २ श्लोक ५३

मनः शरीरयो कष्टयोः निवारयितुं चिकित्साविज्ञानस्य सम्पूर्णं योगदानं विद्यते। कयाचित्पीडया संतप्तानां जनानामाशुरोगोपचाराय आधुनिकीचिकित्सापद्धतिः सफला वर्तते। अयं मानवः सृक्ष्टेः प्रारम्भसमयतः उभयोराध्यात्मिक-भौतिक-पक्षयोः महत्वमङ्गी करोति। आध्यात्मिकोपायैः दुखानां, आत्यन्तिकी ऐकान्तिकी च निवृत्तिर्भवति उक्तञ्च-

**दुःखत्रयाभिघातात् जिज्ञासा तदपघातके हेतौ।**
**दृष्टे साऽपार्था चेन्नैकान्तातत्यन्ततोऽभावात्॥**[१]

सुखैकविषयाभूतानां प्रवृत्तिः। सुखे सति दुःखहेतावसम्भवति। अतो भवति दुःखाऽभिघातके जिज्ञासा?

तद्दुःखं त्रिविधमाध्यात्मिकमाधिदैविकमाधिभौतिकं चेति। तत्राध्यात्मिकं द्विविधं शारीरं मानसञ्च। एतेषां दुःखानां निर्मूलनाय तत्त्वज्ञानमेव कारणम्। परन्त्वत्र मनः शरीरयो दुःखनिर्मूलनाय शरीरस्यौषधादिभिः।

मानसस्य मनोज्ञस्त्रीपानभोजनवस्त्रालङ्कारादिप्राप्त्या तथान्येषां दुःखानामपि शान्त्यै सुकरोपायः कल्पते। स चोपायः योगशात्रे (अर्थात् योग-विद्या) वर्तते। सृष्टिप्रारम्भसमयतोऽद्यावधि प्राणिनो भवाब्धौ स्वकर्मविपाकं भुञ्जन्ते। संसारानलेषु संप्ततेषु जीवनामुद्धाराय भगवान् पतञ्जलिर्जगत्यामाविर्बभूव। महर्षिणा भूतानामुद्धाराय लोकश्रेयसे च मनोवाक्शरीराणां संशुद्ध्यै त्रीणि शास्त्राणि रचितानि।

**योगेन चित्तस्य, पदेन वाचां मलं शरीरस्य च वैद्यकेन।**
**योऽपाकरोत्तं प्रवरं मुनीनां पतञ्जलिं प्राञ्जलिरानतोऽस्मि॥**[२]

श्लोकेनानेन प्रमाणयति - भगवता पतञ्जलिना भूतानां कायशुद्ध्या, मनःशुद्ध्या, वाक्शुद्ध्या च लोकोपकारः कृतः। वाक्कायमनषां निर्मलत्वात्, शुद्धान्तःकरणोदयात् प्राणिनामैहिकामुष्मिकं कल्याणं भवेत्। तत्कल्याणं योगशास्तेणैव सर्वतोभावेन भवितुमर्हति। शरीरसौष्ठवसम्पन्नाय आरोग्यताप्राप्तये योगेन समं शास्त्रं नास्ति। योग एव भूतानां परमं साधनम्, योगदर्शनम् प्रथमोपदेष्टृरूपेण हिरण्यगर्भो ब्रह्मा श्रूयते। परन्तु साम्प्रतं हिरण्यगर्भोपदिष्टः योगः नहि समुपलभ्यते। साम्प्रतं यस्य योगदर्शनस्योपलब्धिर्भवति।

तद्यागदर्शनम् महर्षिपतञ्जलिना कृतमेव वर्तते।

---

१. साख्यकारिका १

२. भोजवृत्तौ

महर्षिप्रवरेण पतञ्जलिमुनिना जीवा दुस्तरै व्याधिभिर्निर्मुक्ता भवन्तु, मनस्याकलय्य सरलतया, सुगमतया, रोगनिवारणाय पातञ्जलयोगदर्शनं विरचितम्। महर्षिणा कृतं योगदर्शनं निखिलसाधनानां सार्वभौमभित्तिः। मन्त्रयोगस्य, हठयोगस्य, लययोगस्य, राजयोगस्य, वा पृथक् पृथक अधिकारिणः भक्ताः, तपस्विनो, ज्ञानिनो वा भवेयुः। सर्वेषामेव कृते दर्शनमिदं कल्याणमार्गं दर्शयति।

अष्टाङ्गयोगातिरिक्तानां विविधयोगमार्गाणां वर्णनमपि-एतद्योगसूत्रेषु समुपलभ्यते। नानायोगोपायैः प्राणिनो विविधानां व्याधिनां मूलतः मन्त्रमण्यौषधीनां सेवनात् प्रशमनं कुर्वन्तिस्म। उच्यते ग्रहशान्तौ-

**पूर्वजन्मकृतं पापं व्याधिरूपेण बाधते।**
**तच्छान्तिरौषधोपायैः जपहोमार्चनादिभिः॥**

इत्युक्तेः प्राणिनां सर्वेषामनर्थानां मूलम् असंयम एव। असंयमविषयात्मनां किं कि फलमिति गीताशास्त्रे वर्तते तद्यथा-

**असंयतात्मनां योगो दुष्पाप इति मे मतिः।**
**वश्यात्मना तु यतता शक्योऽवाप्तुमुपायतः॥**[1]

अधुना अत्याधुनिकसाधनेनापि मूलतः रोगशान्तिर्भवति। अतएव योगविद्या आश्रयणेन योग सम्बन्धितः ये ये ग्रन्था विद्यन्ते तेषां ग्रन्थानां सम्यग् पर्यालोचनेन ज्ञायतेयद् योगदिशैव दुस्तराणां रोगाणांम कृते विलक्षणा योगचिकित्सा पद्धतिरासीत्। इदानीमनुसंधानेन ज्ञायते, अमुं योगचिकित्सापद्धतिं विहाय अन्यत् सफलं चिकित्साविज्ञानं किमपि नास्ति। महर्षिणा पतञ्जलिना योगेन समम्। मानवानां जीवनसाफल्याय, अन्यत, सुकर साधनं नैव विहितम्।[2]

युगारम्भकालादेव ऋषयः, मुनयः, तपस्विनः, अत्यन्तसाधारणो जनः योगाश्रयणेन जीवनं सफलं अकार्षुः। नात्र दृष्टान्तस्यावश्यकता। सम्पूर्णं विश्वं भौतिकव्याधिभिः संतप्तं वर्तते, एवञ्च स्पष्टं भवति, वयं सर्वे भौतिकमाध्यात्मिकञ्चोभयोः व्याधयोः निवारणाय योगचिकित्साविज्ञानस्य पद्धतिसु रुचिं कुर्मः। यतोहि योगचिकित्साविज्ञानस्य सफलतायाः प्रमाणं वयं जानीमः। ऐतिहासिकचिकित्साप्रमाणैः आधुनिकचिकित्सकैः नानागोष्ठिसु योगचिकित्साविज्ञानस्य चर्चायाः महत्ता स्वीकृताः। अद्य सम्पूर्णं चिकित्साविज्ञानं योगेन साकं युक्तमस्ति। साम्प्रतं चिकित्सकाः औषधिप्रदानसमये प्राणिनं सम्बोधयन्ति।

**युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु।**
**युक्तस्वप्नावबोधस्य योगो भवति दुःखहा॥**

---

१. भूमिका ग्रहशान्तौ
२. गीता

**भवतापेन तप्तानां योगो हि परमौषधम्।**
**ततः प्रत्यक्चेतनायाधिगमोप्यन्तरायाभावश्च॥**

व्याधि समये निखिले विश्वे प्राणिनां स्वास्थ्यलाभाय उद्धाराय च नानायोगशिक्षणसंस्थाः ध्याननिकेतनानि, निष्फलानि भवन्ति।

योगविद्यासु सैव शक्तिः विद्यमाना वर्तते, यया प्राणिनः असाध्यरोगैः मुञ्चन्ति, योगाभ्यासिने न कोऽपि व्याधिः स्पृशति। अद्य योगाभावे प्राणिनः नानाव्याधिभिः संलिप्ताः वर्तन्ते। को हेतुः अत्याधुनिकाः व्याधयः पूर्वकाले न भवन्ति स्म, यतोहि पूर्वस्मिन् काले मानवजीवनं योगमयमासीत् प्रत्याहारेण इन्द्रियाणां निग्रहस्य परमावश्यकता भवति। वशे हि यस्येन्द्रियाणी तस्य प्रज्ञा प्रतिष्ठिता इति न्यायेन इन्न्द्रियजयो भवति। इन्द्रियजयात् शरीरस्य पुष्टिर्जायते। विषयसेवनेन इन्द्रियाणि रुग्णानि भवन्ति। अतः प्रत्याहारस्य सर्वदा संसेवनात् इन्द्रियाणि स्वास्थ्यलाभाय प्रतिष्ठितानि भवन्ति। आहारादियुक्तिपूर्वको जालंधरादिबंधयुक्तविशिष्टः प्राणायामः उपयुक्त इत्युच्यते। तेन सर्वरोगक्षयः भवेत्। "पूर्ववत् कुम्भयेत् प्राणं रेचयेदिडया ततः।"

**श्लेष्मदोषहरं कण्ठे देहानलविवर्धनम्।**
**नाडीजलोदरधातुगतदोषविनाशकम्॥**

**प्राणायामादियुक्तेन सर्वरोगक्षयो भवेत्।**
**अयुक्ताभ्यासयोगेन सर्वरोगसमुद्भवः॥**

**अपानमूर्ध्वमुत्थाप्य प्राणं कंठादधो नयेत्।**
**योगीजराविमुक्तः सन्षोडशाब्दवयो भवेत्॥**

**विधिवत्कुंभकं कृत्वा रेचयेदिडयानिलम्।**
**वातपित्तश्लेष्महरं शरीराग्निविवर्धनम्॥**

ऐतन स्पष्टं भवति प्राणायामिनः प्रत्याहारिणश्च जनाः कदापि हृदयरोगैः, नेत्ररोगैः, वायुरोगैः च न पीडयन्ति, ते सर्वथा सर्वदा च स्वस्थाः भवन्त्येव। येषां व्याधीनां निदानम् आधुनिकचिकित्साविज्ञाने अतिव्ययेन भवन्ति, तेषां निदानं व्ययेन विनाऽपि योगाभ्यासेन संभवो वर्तते।

अस्मिन् योगचिकित्साविज्ञाने भद्रासनं, मयूरासनं, सिद्धासनं, कपालासनं, पद्मासनादीनामासनेन पालनरत् अंगलाधवः, गुल्मोदरः, अतिभक्षणं, जन्योव्याधिः प्रभृतयो कालकूटादि विषमप्रहरन्ति एतानि आसनानि। इति आसनमहत्त्वं। हठयोगप्रदीपिकायां योगशास्त्रे विस्तरेण चर्चितानि।

# पञ्चरात्रागमानां विमर्शः

डॉ. शीतलाप्रसादपाण्डेयः

आगमाः खलुः भारतीयसंस्कृतेः रहस्यभूताः परिरक्षिताः सन्ति। आसमन्तात् अर्थं गमयति इति आगमः। निःशेषेण अर्थं गमयति इति निगमः। ये गत्यर्थाः धातवः ते ज्ञानार्थाः। पदवाक्यप्रमाणज्ञः भगवान् भर्तृहरिस्तावत् महाभाष्ये विद्यमानं "पारम्पर्येणाविच्छिन्न उपदेशः आगमः श्रुतिलक्षणः स्मृतिलक्षणश्च सः इति"।[1] अर्थात् आगमः परम्परया आगतः उपदेशविशेषः तथैव प्रमाणभूतः यथा श्रुतयः स्मृतयश्च प्रमाणभूता इत्यस्याभिप्रायः। श्रीशङ्करभगवत्पादैः ईशावास्योपनिषद्भाष्ये "श्रुतवन्तो वयं धीराणां धीमतां वचनम्। ये आचार्या नोऽस्मभ्यं तत्कर्म च ज्ञानं च विचचक्षिरे व्याख्यातवन्तस्तेषामयमागमः पारम्पर्यागत इत्यर्थः"।[2] सर्वदर्शनतत्त्वज्ञ आचार्यवाचस्पतिमिश्रः आगमस्य सामान्यं लक्षणं निर्दिशन् – "आगच्छन्ति बुद्धिमारोहन्ति यस्मात् अभ्युदयनिःश्रेयसोपायाः सः आगमः इति" अवर्णयत्।[3] एतावता लौकिककल्याणमोक्षोपाय-प्रतिपादकं शास्त्रमागमशास्त्रमिति फलितम्। वाराहीतन्त्रे प्रतिपादितम् आगमलक्षणन्तु-

**सृष्टिश्च प्रलयश्चैव देवतानां यथार्चनम्।**
**साधनं चैव सर्वेषां पुरश्चरणमेव च॥**

**षट्कर्मसाधनं चैव ध्यानयोगश्चतुर्विधः।**
**सप्तभिर्लक्षणर्युक्तमागमं तद्विदुर्बुधाः – इति॥**[4]

इत्थमत्रागमशास्त्रे सप्तविषयाणां निरूपणमुक्तम्। तन्त्राणामाधारः नास्ति कश्चित् ग्रन्थविशेषः। तन्यते विस्तार्यते ज्ञानमिति तन्त्रम्। तन्त्रशब्दप्रवृत्तौ निमित्तं विष्णुसंहितायां श्रूयते-

---

१. महाभाष्यत्रिपदीटीका, १/१/१

२. ईशावास्योपनिषद्भाष्ये- १०

३. योगभाष्यम्-तत्त्ववैशारदी व्याख्या, १/७

४. भारतीयदर्शन, आचार्यबलदेव उपाध्यायः, पृ. ४३३-३४

**'सर्वेऽर्था येन तन्यन्ते त्रायन्ते च भयाज्जनाः।**
**इति तन्त्रस्य तन्त्रत्त्वं तन्त्रज्ञाः परिचक्षते' इति॥**[१]

तन्त्राणि तु सर्वथा अपौरुषेयाणि ज्ञानरूपाण्येव। अयमेव ज्ञानविशेषः आगमपदवाच्यः इति तन्त्रशास्त्रस्य सम्मतं मतम्। तन्त्रसारसंग्रहे तन्त्रस्य वैशिष्ट्यं इत्थम्-

**तन्त्रमार्गास्तु हरिणा ह्यसंख्याः कीर्तिता अपि।**
**तेष्वयं सुगमो मार्गः सुफलश्चानुतिष्ठताम्॥**[२]

**आगमवैविध्यम्**

आगमानां साध्यभेदेन, देशभेदेन, कालभेदेन च वैविध्यं दरीदृश्यते। आचन्द्रार्कं यावत् पृथिव्यां स्थिता मनुजा मनोऽभिलषितसुखप्राप्तये। दुःखत्रयविनाशाय च काम्यन्ते यतन्ते च। तत्र च देवतानां वैविध्यात् साधनानां वैविध्यं, अत एव साधननिरूपकाणामागमानां बहुविधा विस्तरा।

शैव-शाक्त-वैष्णव-जैन-बौद्ध-गाणपत्य-सौरादिका भेदा आगमसाहित्यस्येतिहासे प्रसिद्धाः। अत्र च साम्प्रतम् गाणपत्य-सौर-स्कान्दाख्या पृथक्तया दुर्लभा एव। बौद्ध-जैनागमश्च यद्यपि प्राप्यन्ते, किन्तु वेदविरुद्ध-वेदनिन्दात्मकप्रचाराधिक्याद् वैदिकैस्ते आगमा नैव स्वीक्रियन्ते। शैवशाक्तात्मकौ भेदौ यद्यपि वैदिकौ, तथाऽपि तत्राभक्ष्यनैवेद्यपेयादिनिरूपणदर्शनात् स्तम्भन-उच्चाटनादि प्रयोगाणामाधिक्यात् सात्त्विकेभ्यो मोक्षैकसाध्यं स्वीकुर्वाणेभ्यो न रोचन्ते। परिशेष्याद् नारायणमुखोद्गीतं वैखानस-भागवत-पाञ्चरात्रभेदभिन्नं वैष्णवागममेव सात्त्विकैः श्रद्धयाऽऽद्रियते। रुचिभेदेन स्वीकाराऽस्वीकारादिकी कल्पना। सर्वेषामागमानां साम्यं तु तदेव यदत्र भारतीयः सांस्कृतिको निधिर्निहितः।

**पाञ्चरात्रप्रामाण्यम्**

पाञ्चरात्रं तावत् भगवतः परमकारुणिकस्य मुखारविन्दान्निःसृतमत एव परमप्रमाणभूतमिति विदितचरमेव समेषामपि विदुषाम्। श्रीमन्नारायणस्य श्रियः पत्युः महिमातिशयवर्णनपूर्वकं तदर्चनादेः विस्तरेण वर्णनमेव पाञ्चरात्रस्य प्रधानं प्रतिपाद्यम्। धर्मशास्त्रेषु इतिहासपुराणेषु च अनधिगताः प्रतिमाप्रतिष्ठानपद्धतयः तदर्चनप्रकारश्च पाञ्चरात्रे सम्यक् प्रपञ्च्यन्ते।

**ध्यायन् कृते यजन् यज्ञैस्त्रेतायां द्वापरेऽर्चयन्।**
**यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवम्॥**[३]

---

१. विष्णुसंहिता, पटल-७
२. तन्त्रसारसंग्रहः, ३/१३८
३. विष्णुपुराणे, ६/२/१७

पाञ्चरात्रचर्चा संहिता-ब्रह्मणादिग्रन्थेष्वपि वरीवर्ती। शतपथब्राह्मणे पञ्चरात्रसत्रं प्रचलति।[१] छान्दोग्योपनिषदि श्रुता एकायनविद्या।[२] श्रीप्रश्नसंहितायामेकायनवेदरूपत्वमुक्तम्-

**वेदमेकायनं नाम वेदानां शिरसि स्थितम्।**
**तदर्थकं पञ्चरात्रं मोक्षदं तत्क्रियावताम्॥**

**यस्मिन्नेको मोक्षमार्गो वेदे प्रोक्तः सनातनः।**
**मदाराधनरूपेण तस्मादेकायनं भवेत्॥**[३]

पाञ्चरात्रस्य प्रमाणविषये प्रथमं कुमारिभट्टेन तन्त्रवार्तिके शङ्का समुद्भाविता। ततश्च भगवता शङ्कराचार्येण ब्रह्मसूत्रभाष्ये परमतनिराकरणरूपे उत्पत्यसम्भवाधिकरणे कश्चन विप्रतिपत्तयः समुद्भाविताः।[४] एवं पाञ्चरात्रग्रन्थेषु प्रमाणभूतांशा एवाधिकाः। अल्पांश एवाप्रामाण्यमिति इतरतन्त्रवैलक्षण्यं शाङ्करेष्टम्।

श्रीयामुनाचार्येण आगमप्रामाण्ये[५], श्रीरामानुजाचार्येण श्रीभाष्ये, श्रीवेदान्तदेशिकेन पञ्चरात्ररक्षायां[६] तदनन्तरञ्च बहुभिर्विद्वद्भिरप्रामाण्यशङ्कानिराकृता प्रामाण्यञ्च प्रतिष्ठापितम्।[७]

श्रीजयन्तभट्टेन न्यायमञ्जर्याम् आगमानां प्रामाण्यं स्पष्टरूपेण प्रतिादितम्।[८]

आगमप्रतिपादनानुसारेण विशालानि देवलयानि तेषु च मन्दिरेषु महोत्सवाः, दीक्षायाः विषयाः सम्पूर्णेऽस्मिन् जनसमाजे व्याप्ताः, अत्र अप्रामाण्यशङ्का न तेषां सत्ताभावाय समर्था।

**पाञ्चरात्रस्य प्राचीनत्वम्**

पाञ्चरात्रागमः कदा भूम्यां प्रकटित इति प्रश्नस्यायमेवोत्तरं यद् नारायणमुखोद्गीतत्त्वाद्[९] अनादिकालत एव प्रवृत्तः, तथापि ऐतिह्यविदां मनस्तोषाय विचार्यते। निश्चितमेव पाञ्चरात्रागमसम्प्रदायः प्राचीनः

---

१. शतपथब्राह्मण, १३/६/१
२. छान्दोग्योपनिषद्, ७/१/३
३. श्रीप्रश्नसंहिता, २/२३८-३९
४. ब्रह्मसूत्रभाष्य, २/२
५. ओरियण्टल इन्स्टीच्यूट, बड़ौदा, १९७६
६. आड्यारलाइब्रेरी एण्ड रिसर्च सेण्टर, मद्रास, द्वि.सं., १९७६
७. (क) आगमाज़ एण्ड साउथ इण्डिया वैष्णविज्म, डॉ. वी. वरदाचारी, ट्रिप्लचेन, मद्रास, १९८२
(ख) पाञ्चरात्रपारम्यम्, श्रीउत्तमूरवीरराघवाचार्यैः, राष्ट्रियसंस्कृतविद्यापीठम्, तिरुपतिः, १९९१, पृ. १-२५
८. चौखम्भासंस्कृतंसीरीज, वाराणसी, १९७१
९. "पाञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम्" - महाभारतम्, १२/३३७/६३

आगमिकप्रक्रिया विशेषः। पाद्मसंहिताऽन्तर्गतः सूरिः शब्दः दृश्यते।[१] ऋग्वेदे सूरिः शब्दः समुपलभ्यते।[२] शतपथब्राह्मणे च " पुरुषो ह नारायणोऽकामयत। अतितिष्ठेयं सर्व्वाणि भूतान्यहमेवेदं सर्वं स्यामिति स एतत्पुरुषमेधं पञ्चरात्रं यज्ञक्रतुमपश्यत"।[३] इति नामनिनिर्देशपूर्वकं पाञ्चरात्रविषयः प्राप्यते।

एकायनश्रुतिमधीयाना औपगायन- कौशिक- शाण्डिल्य- भरद्वाज- मौञ्जायनाख्याः पञ्च आचार्याः शास्त्रमेनं प्रवर्तयामासुः।[४] डॉ. हेमचन्द्ररायचौधरी, डॉ. आर.जी. भण्डारकरप्रभृतिभिः छान्दोग्योपनिषद्- पाणिनिसूत्र- पातञ्जलमहाभाष्य- शिलालेखनादिप्रामाण्येनास्य शास्त्रस्य प्राचीनत्वं साधितम्।[५] भगवद्गीता पाञ्चरात्रसम्मतं प्रपत्तिसिद्धान्तं मानयति इति डॉ. जी.ए. ग्रियर्सनमहोदयेन।[६] उत्पलवैष्णवकृतायां स्पन्दप्रदीपिकायां- पाञ्चरात्रश्रुति- पाञ्चरात्रोपनिषद्- कालपरा- जयाख्यसंहिता- सङ्कर्षणसूत्र- षाड्गुण्यविवेक- सात्त्वतसंहिता सदृशाश्चागमग्रन्था उद्धृता विद्यन्ते।[७] पाञ्चरात्रशास्त्रस्य प्राची ना साधकानि प्रमाणानि सर्वेषु ग्रन्थेषु डॉ. राघवप्रसादचौधरीमहोदयेन विस्तरेण प्रदर्श्यन्ते।[८]

इत्थं अङ्गुल्यग्राहिकतया पाञ्चरात्रागमारम्भकालस्य निश्चिततया वक्तुमशक्यत्वेऽपि उक्तैः प्रमाणैः अस्य सम्प्रदायस्य प्राचीनसत्वविषये नास्ति संशयः। अयं सम्प्रदायः ख्रिस्ताब्दगणनातोऽनेकशताब्द-पूर्वकालादेव प्रसृत आसीत् इति कथनं युक्तमेव।

**पाञ्चरात्रशब्दनिर्वचनम्**

भागवत-सात्त्वत-एकायन-भगवच्छास्त्रशब्दैः व्यवह्रियमाणस्य पाञ्चरात्रस्य नैकविधानि निर्वचनानि दृश्यन्ते।[९] तत्र तावत् "यत्सन्निधौ पुराणानि, वेदाः, वेदान्तम्, सांख्यं, योगश्चेति पञ्च दर्शनानि

---

१. पाद्मसंहिता, चर्यापादः, २/८७-८८

२. ऋग्वेदः, ९/२/७

३. शतपथब्राह्मणम्, १३/६/११

४. जयाख्यसंहिता, भूमिका, पृ. ९

५. "अर्ली हिस्ट्री ऑफ दि वैष्णव सेक्ट" इत्याख्ये- "वैष्णविज्म, शैविज्म एण्ड अदर माइनर रिलीजियस सिस्टम्स" इत्याख्ये च क्रमशो द्रष्टव्यमेतत्।

६. मिडिवल रिलीजियस लिटरेचर, जे. गोण्डामहोदयः, पृ. ६

७. जयाख्यसंहिता, भूमिका, पृ. ७

८. 'पाञ्चरात्रागम', बिहारराष्ट्रभाषापरिषद्, पटना, १९८७, पृ. १२-१६

९. (क) पाद्मसंहिता, चर्यापादः, २/८८
(ख) इण्ट्रोडक्शन टू दि पाञ्चरात्र लिटरेचर, डॉ. श्रेडर, आड्यार, मद्रास, १९१६, पृ. २४-२६
(ग) पाञ्चरात्र-परम्परा और साहित्य (निबन्ध), डॉ. अशोककुमार कालिया, संस्कृतसाहित्य का बृहद् इतिहास, लखनऊ, तन्त्रागमखण्ड, पृ. २९-४२

रात्रिवच्छ्यामतां व्रजन्ति, तत्र पञ्चरात्रम्"।[१] शाण्डिल्यसंहितानुसारं सांख्यं, योगः, शैवम्, वेदाः आरण्यकमिति पञ्च शास्त्राणि परिगण्यन्ते।[२] पाद्मसंहितामते सांख्यं, योगः, बौद्धः, जैनः, शैव इति पञ्चशास्त्राणि स्वीकृतानीत्येव भेदः।[३]

परमसंहितानुसारं प्राणिनां कृते रात्रिभूतानां महाभूतानां पञ्चगुणानां च निवृत्तिसाधकत्त्वादेतच्छास्त्रं पाञ्चरात्रमित्युक्तम्। एतदनुसृत्य भूतवर्गः अव्यक्तः पुरुषश्चेति रात्रिसंज्ञकः।[४] कपिञ्जलसंहिताऽपि पाञ्चरात्रशब्दस्य परमसंहितास्थप्रथममर्थं वर्णयति।[५]

पाञ्चरात्रिकज्ञानप्राप्तिहेतुकसमये विहगेन्द्रसंहिता कथयति यद् आदौ कृतयुगे अनन्तः, गरुडः, विष्वक्सेनः, शिवः, ब्रह्मा इति पञ्चभिः क्रमशः पञ्चसु रात्रिषु नारायणसकाशाद् ज्ञानं प्राप्तम् अतः शास्त्रमिदं पाञ्चरात्राख्यमिति।[६]

संहितान्तरेषु श्रोतृणं नामानि भिन्नानि प्राप्यन्ते, किन्तु विषयविचारः समानः। यथा- सनत्कुमारसंहितायां- ब्रह्मा, शिवः, इन्द्रः, ऋषिः, अन्तः साक्ष्येन बृहस्पतिः इति पञ्च ज्ञानं प्राप्तवन्तः। विश्वसंहितायां ब्रह्मा, शिवः, नागः, ऋषिः बृहस्पतिरिति ज्ञानं प्राप्तवन्तः। तदेवं पञ्चरात्रिषु ज्ञानप्रापणात् पाञ्चरात्रमिति।[७]

श्रीप्रश्नसंहितानुसारम् अज्ञानमेव रात्रिः। पञ्चेति पञ्चात्मक-अज्ञाननाशकत्वादस्य शास्त्रस्य पाञ्चरात्रमिति अन्वर्थकं नाम।[८]

विश्वामित्रसंहितामते 'पञ्चरात्र' दार्शनिकं निर्वचनम् - पञ्च- इन्द्रियाणि चक्षुः श्रोतादीनि, पञ्चभूतानि, पञ्चविषयाश्च इत्येषामुपलक्षणम्। रा- आदानार्थकराधातोरुपलक्षकः। त्र- त्राणरक्षणार्थोपलक्षकः, तथा च पञ्चेन्द्रियाणां पञ्चभूतानां पञ्चानां रूपरसादिगुणानाञ्च आदातुः जीवात्मनाः पालकं रक्षकं पञ्चरात्रशास्त्रमित्यर्थः।[९] नारदपञ्चरात्रे तु-

**"रात्रं च ज्ञानवचनं ज्ञानं पञ्चविधं स्मृतम्। तेनेदं पञ्चरात्रं हि प्रवदन्ति मनीषिणः॥"**[१०]

---

१. पौष्करसंहिता, ६३/३०७-३०८
२. शाण्डिल्यसंहिता, १/४/७५-७६
३. पाद्मसंहिता ज्ञानपादः, १/४७-५३
४. परमसंहिता, १/३९-४१
५. कपिञ्जलसंहिता, १/३१-३२
६. विहगेन्द्रसंहिता, प्रथमपटलः, पृ. ७
७. विश्वसंहिता, १२/४६-४७
८. श्रीप्रश्नसंहिता, २/४०
९. विश्वामित्रसंहिता, २/३-५
१०. नारदपाञ्चरात्रम्, ज्ञानामृतसारः प्रथमरात्रम्, १/४४

**पुरुषोत्तमसंहितानुसारं भक्तानां मुक्तिसाधिकाया भगवद्भक्तेः बोधकं शास्त्रं पाञ्चरात्रमित्युच्यते।**[१]

एतेषु मतेषु परिशिलितेषु इदमेव वक्तव्यं भवति, यत् पाञ्चरात्रसम्प्रदायस्य कालमहिम्ना विच्छेदे सति कुशलमतिभिः पाञ्चरात्रशब्दस्य विभिन्नव्युत्पत्तयः संहितासु प्रकाशिताः स्युरिति।

## पाञ्चरात्रीयं वाङ्मयम्

पाञ्चरात्रग्रन्थेषु सात्त्वतं, पौष्करं जयाख्यं चेति संहितात्रयं रत्नत्रयनाम्ना प्रसिद्ध्यति। आगमसिद्धान्तः, मन्त्रसिद्धान्तः, तन्त्रसिद्धान्तः, तन्त्रान्तरसिद्धान्त इति[२] सिद्धान्तचतुष्टयोपेते पाञ्चरात्रे बहवो ग्रन्था वर्तन्ते। शर्मण्यविदुषा श्रादरमहाशयेन दशाधिकद्विशतसंख्याकाः पाञ्चरात्रसंहिताः परिगणिताः।[३] पाञ्चरात्रसंहितानां सङ्ख्यानिर्णयः क्लेशसाध्य इति कथयन्तो डॉ. उ. शङ्करभट्टमहोदयाः विश्वामित्रसंहितायाः तुलनात्मकमध्ययनम् इति स्वकीये शोधप्रबन्धे अष्टचत्वारिंशदधिकद्विशतसंख्याकाः पाञ्चरात्रसंहिता इति समुल्लिखन्ति। अमेरिकादेशीयविदुषा डॉ. एच. डेनियलस्मिथ महोदयेन "ए डिस्क्रिप्टिव बिब्लियोग्राफी ऑफ दि पाञ्चरात्रागम" इत्याख्ये ग्रन्थे विशदरूपेण पाञ्चरात्रग्रन्थाः निर्दिश्यन्ते।[४] एतदतिरिक्ततया डॉ. राघवप्रसादचौधरीमहाभागैः "भार्गवतन्त्रम्" इत्याभिख्या पाञ्चरात्रसंहिता प्रकाशिता।[५] आचार्यव्रजवल्लभद्विवेदिभिः "नारदपञ्चरात्रम् संकर्षणसंहिता" इत्याभिख्या पाञ्चरात्रसंहिता विमर्शपद्धतिमनसृत्य संशोध्य प्रकाशिता।[६] अन्यासां मुद्रितानां शोधपद्धत्यनुरोधेन संस्कृत्य मुद्रापणमपेक्षणीयमास्ते।

एतेषु पाञ्चरात्रसम्प्रदायः साम्प्रतं दक्षिणभारते प्राधान्येन तमिलनाडुप्रदेशे प्रवर्तते। श्रीरङ्गपत्तनप्रभृतिषु देवस्थानेषु पञ्चरात्रपद्धत्या देवाराधनं भवतीति विभावनीयम्।

## पाञ्चरात्रीयं दर्शनम्

पाञ्चरात्रागमे परब्रह्मणः स्वरूपं निर्गुणसगुणोभयरूपतयोपवर्ण्यते। आदिमध्यान्तरहितं, वृद्धिक्षयरहितम्, अच्युतं, निरुपमं, ज्योतिः, नित्यतृप्तं, अव्यम्, अमूर्तं, सच्चिदानन्दात्मकम् इत्यादिभिः निर्गुणतया शुद्धस्फटिकसंकाशः, सर्वव्यापकः, ओङ्कारः, चिन्त्यः, दीप्तिमान्, वासुदेवाह्वयः, द्विहस्तः, एकवक्त्रः, मायारूपः इत्यादिभिः सगुणतया च परं ब्रह्म निर्दिश्यते।

---

१. पुरुषोत्तमसंहिता, १/४
२. पारमेश्वरसंहिता, १९/५२२-५२३
३. इण्ट्रोडक्शन टू दि पाञ्चरात्र, पृ. २१
४. गायकवाडओरियण्टलसीरीज, बड़ौदा, भाग १-२, १९७५-१९८०
५. गंगानाथ झा केन्द्रियसंस्कृतविद्यापीठ, इलाहाबाद-२, १९८१
६. स्वामिनारायण अक्षरपीठ, शाहीबाग, अहमदाबाद-४, जुलाई २००४

अहिर्बुध्न्यसंहितायां, जयाख्यसंहितायां, लक्ष्मीतन्त्रे च ग्रन्थारम्भे पाञ्चरात्रदर्शनं व्याक्रियते। ज्ञानपादस्य सत्ता पाद्मतन्त्रे पृथगेव राजते। डॉ. सुरेन्द्रनाथदासगुप्तरचिते "भारतीयदर्शन का इतिहास" इति शीर्षके जयाख्यसंहितायामहिर्बुध्न्यसंहितायां विवेचितं सामान्यरूपेण व्याख्यातम्।[१] अहिर्बुध्न्यसंहिताप्रदर्शितं दर्शनं डॉ. ओटोश्रादरकृते तत्संहिताया उपोद्घाते विशेषेण विवेच्यते।[२] डॉ. अशोककुमारकालियाकृते "लक्ष्मीतन्त्र धर्म और दर्शन" इत्याख्ये ग्रन्थे लक्ष्मीतन्त्रनिर्दिष्टं दर्शनं विस्तरेण वर्ण्यते।[३] नारदीयसंहितादिषु वर्णितस्य दर्शनस्य स्वरूपं डॉ. राघवप्रसादचौधरीमहोदयेन "पाञ्चरात्रागम" इत्याख्ये ग्रन्थे प्रतिपाद्यते।[४] आचार्यव्रजवल्लभद्विवेदेन सात्वतसंहितायां तु दर्शनप्रक्रियाप्रदर्शकानि स्थलानि यत्र तत्र विप्रकीर्णानि सन्ति, तानि संगृह्य तत्रत्यं दर्शनं तस्याः संहिताया उपोद्घाते विस्तरेण व्याख्यातम्।[५] डॉ. एस.आर. भट्टग्रथिते "दि फिलासफी ऑफ पाञ्चरात्र ऐन अद्वैतिक एप्रोच" इत्याख्ये ग्रन्थे पाञ्चरात्रसंहितादिषु वर्णितस्य दर्शनस्य स्वरूपं विस्तरेण कृतं द्रष्टव्यं जिज्ञासुभिः।[६] प्रो. एस.के. रामचन्द्रावरचितेन "आगमकोशः पाञ्चरात्रागम" इति शीर्षके आङ्लभाषया नानासंहिताधारेण पाञ्चरात्रीयं दर्शनं वैशद्येन ख्याप्यते।[७] "संस्कृतविद्या शोधपत्रिकाख्ये" "पाञ्चरात्रागमे प्रमेयविमर्शः" शोधनिबन्धे अस्माभिः विवेचितमिति तत्र-तत्र सर्वमेतद् द्रष्टुं शक्यते।[८]

इदं चात्र विशेषतोऽवधातव्यम्- पाञ्चरात्रागमः परव्यूहविभवहार्दार्चाप्रतिपादकः।[९] परब्रह्मणः परं रूपमेकमेव परव्यूहविभवान्तर्याम्यर्चारूपैः पञ्चभिः प्रकारैरवतिष्ठत इति पाञ्चरात्रागमो विबोधयति। तत्र षाड्गुण्यपरिपूर्णा अनन्तगरुडविष्वक्सेनादिभिः परिसेविता श्रीमति वैकुण्ठे विराजमाना मूर्तिः परशब्देन कीर्त्यते।

---

१. भारतीयदर्शन का इतिहास, भाग ३, पृ. १२-५७
२. इण्ट्रोडक्शन टू दि पाञ्चरात्र, पृ. २७-९३
३. लक्ष्मीतन्त्रः धर्म और दर्शन, पृ. ६१-१७८
४. पाञ्चरात्रागम, पृ. ३७-६२
५. सात्वतसंहिता, प्राक्कथन, पृ. १८-४३
६. The Philosophy of Pā-carātra, An Advaitic Approach, Butala & Co., Jahawar Nagar, Delhi, 2nd Ed., 1980
७. Āgama-kosha, Vol. IV, Pā-carātragama, Vol. IV, Kalpataru Research Academy, Bangalore-18, 1991
८. संस्कृतविद्या, संस्कृतविद्याधर्मविज्ञानसङ्कायः, काशीहिन्दूविश्वविद्यालयः, वाराणसी, २००६, पृ. १४४-१४८
९. मन्मूर्तयः पञ्चविधा वदन्त्युपिनिषत्सु च। परो व्यूहो हार्द इति विभवोऽर्चेति भेदतः॥ श्रीप्रश्नसंहिता, २/५४

भगवता जगत्सृष्ट्यर्थं वासुदेव- संकर्षण- प्रद्युम्न- अनिरुद्धरूपेण चतुर्धा विभज्य स्वीकृता मूर्तयो व्यूहपदेनाभिधीयन्ते। पारमेश्वरेषु वासुदेवादिचतुर्षु रूपेषु षाड्गुण्यं क्वचिदभिव्यक्तं क्वचिदनभिव्यक्तं क्वचिदुज्ज्ववलं च भवति। ज्ञानादिषण्णां गुणानां साम्यरूपो वासुदेवः,[१] ज्ञानबलयोर्विशेषेण भास्वरः संकर्षणः, ऐश्वर्यवीर्याभ्यां विशेषेणभास्वरः प्रद्युम्नः, शक्तितेजः 'प्रचुरः अनिरुद्धः।[२] एभ्यो वासुदेवादिव्यूहेभ्यः प्रत्येकं त्रयस्त्रयः केशवादयो द्वादश देवा अवतीर्णाः। ते च व्यूहान्तरपदेनाभिधीयन्ते।[३] विशाखयूपस्य स्वरूपं लक्ष्मीतन्त्रे निर्दिष्टम्।[४] श्रीमद्रहस्यत्रयसारे तत्त्वत्रयाधिकारे व्याख्याया सारास्वादिन्याम् इत्थम्-

"परव्योम्नि विशाखयूपाख्यः कश्चिद् भगवतो रूपविशेषः। तत्रोर्ध्वाधःप्रदेशेषु जाग्रत्स्वप्नसुषुप्तितुरीयसंज्ञकानि चत्वारि स्थानानि। एकैकस्थानेऽपि वासुदेवादिमूर्तिचतुष्टयं विशाखयूपस्य शाखाचतुष्टयवत् प्रागादिदिक्षु परितो विराजते। तत्र जाग्रतस्थानस्थितासु मूर्तिषु सृष्ट्यादिजगद्व्यापारसितादिवर्णायुधादिपौष्कल्यम्। तदुपरितेन स्वप्नस्थानमूर्तिचतुष्टये जगद्व्यापारेच्छामात्रम् पूर्वमूर्तिकारणावस्थेयम्। तत्र वर्णानामनुत्कटत्वं ध्वजाद्युपकरणराहित्यं च। सुषुप्तिस्थानस्थमूर्तिषु आयुधादेरपि रेखारूपेण सद्भावः जगद्व्यापारेच्छया अप्यनाविष्कारः वासुदेवमूर्तिमेकां[५] विनाऽन्यत्रैव करचरणाद्यवयवविभागोऽपि। तदुपरि स्थिते तत्कारणभूते तु मूर्तिचतुष्टये तुरीयस्थे सर्वत्र करचरणाद्यवयवविभागाभावः निर्व्यापारतया षाड्गुण्यवत्तया च स्थितिमात्रमिति। उपासितृपुरुषगतजाग्रदादिदशासाम्यमाकलय्य तत्र जाग्रदादिव्यव्यवहारः। लक्ष्मीतन्त्रे चैतद्विस्तरः इति।" इदृशव्यूहभेदानां व्यूहान्तराणां केशवादीनां विभवाख्यानां प्रादुर्भावभेदानां यथायथमराधनादिकमत्र संकर्षणादिभिर्देवैः पाञ्चरात्रमते प्रपञ्चितम्।

पद्मनाभादयोऽष्टत्रिंशद्देवाः विभवपदेनोच्यन्ते। इमे साधुपरित्राणर्थं समयविशेषेषु इहलोके अवतीर्णाः।[६]

उपासकानां हृदयेष्वङ्गुष्ठप्रमितदृश्यतया अवतिष्ठमानः अन्तर्यामी कथ्यते।[७]

---

१. (क) लक्ष्मीतन्त्र, ४/१३
(ख) सात्वतसंहिता, १/२५
२. अहिर्बुध्न्यसंहिता, ५/१८-४३
३. पाद्मसंहिता, ज्ञानपादः, २/२१-२५
४. पुनर्विभववेलायां विना मूर्तिचतुष्टयम्। विशाखयूप एवैष विभवान् भावयत्युत। ते देवा विभावात्मानः पद्मनाभादयो मताः॥ लक्ष्मीतन्त्र, पृ. २७६
५. रहस्यत्र्याधिकार, तत्त्वत्र्याधिकार, पृ. २७६
६. (क) सात्त्वतसंहिता, ९/७७
(ख) अहिर्बुध्न्यसंहिता, ५/५७
(ग) परमसंहिता, २/९३-९५
७. विष्वक्सेनसंहिता, पृ. १२२

शिलादिप्राकृतबिम्बेषु विशिष्टप्रतिष्ठाऽनन्तरं परब्रह्माद्यप्राकृतविग्रहविशिष्टवेषेणानुप्रविश्य भक्तैः समर्च्यमाना प्रतिमा अर्चा इत्युच्यते। शालग्रामशिलायां तु नित्यं संनिहितो हरिः - इति नित्यसंनिध्यातिशयात् शाङ्करभाष्ये च हृदयशालग्रामयोस्तौल्यं दर्शितम्, ईश्वरस्तत्र हृदयपुण्डरीके निचाय्यः द्रष्टव्य उपदिश्यते यथा शालग्रामे हरिः तत्रास्य बुद्धिविज्ञानं ग्राहकम्। सर्वगतोऽपीश्वरस्तत्रोपास्यमानः प्रसीदति इति।[1] इत्थं पर व्यूहादयः पाञ्चरात्रसंहितासूपवर्णिताः।

भगवतः नारायणस्येव लक्ष्म्या अपि नियमेन अवताराः लक्ष्मीतन्त्रादिषु सम्यक् निरूपिताः। षड्विधः श्रीशब्दार्थः लक्ष्मीतन्त्रादिष्वेव विशदीकृतः -

**"श्रीस्त्वं श्रिता शरणमीत्सुभिरार्तरावं श्रुत्वा श्रिता सपादिशार्ङ्गिभुजन्तरालम्।**
**तां श्रावयस्यथ शृणोषि समस्तमेनः श्रीणासि शेषविधये सकलैर्गुणैर्नः॥**[2]

इतोऽधिकमपि श्रीशब्दघटकस्वरव्यञ्जनाभिधित्सितार्थ विशेषप्रकाशनेनोपकरोति लक्ष्मीतन्त्रम्।[3] नित्यविभूतिः मुक्तिस्थानभूता, शुद्धसत्त्वमयी, प्रकृतिविलक्षणा इति पाञ्चरात्रागमे दृश्यते। भगवतः दिव्यमङ्गलविग्रहोऽपि तन्मय एव।

जगत्सृष्टौ भगवन्नारायणः उपादानकारणमिति पाञ्चरात्रसंहितासु निर्दिश्यते। भगवता बादरायणोपि "प्रकृतिश्च प्रतिज्ञादृष्टान्तान्नापराधात्" इति सूत्रे ब्रह्मण उपादानत्वं सम्यङ्निरूप्यते।

प्रकृतेर्महदादीनि तत्त्वानि जायन्ते। एतेभ्यः तत्त्वेभ्यः अण्डस्योत्पत्तिः, अण्डात् प्रजापतेः तस्माच्चराचरजगतः सृष्टिरिति पाञ्चरात्रसंहिता सुप्रतिपाद्यते।[4] ननु सृष्टिक्रमे अहंकारादेव सर्वतन्मात्रोत्पत्तिः कुत्रचित्तु केषाञ्चित् व्यवधानेन, तत्कथं संगच्छत इति चेन्न। नानाश्रुतिविमर्शकाले सर्व-श्रुतिवाक्यानां ऐककण्ठ्यसम्पादनवदत्रापि एकतात्पर्यवर्णनेनादोषात्।

सर्वेषां जीवानां परमप्राप्यः मोक्षः। अनादिवासनायुक्तो जीव इति कथ्यते। तस्य ब्रह्मसमापत्तिर्याऽपुनर्भवता च सा- इति।[5] अपुनर्भवो मोक्षः, सा च ब्रह्मसमापत्तिरित्युक्तं भवति। श्रूयते चायमर्थः "अथ य एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरूपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इति। सेयं सम्पतिः सरितां समुद्र इवेति निदर्शनोदाहरणेन विशदीक्रियते च - "सरित्सङ्घाद्यथा तोयं

---

१. ब्रह्मसूत्र, १/२/७

२. पाञ्चरात्रपारम्यम्, पृ. ९९

३. श्रयन्ती श्रयणीयास्मि शृणामि दुरितं सताम्। शृणोमि करुणा वाचं श्रीणामि च गुणैर्जगत्॥
शयेऽन्तः सर्वभूतानां रमेऽहं पुण्यकर्मणाम्। इडिता च सदा देवै शरीरं चास्मि वैष्णवम्॥
एतान् मयि गुणान् दृष्ट्वा वेदवेदान्तपारगाः। गुणयोगविधानज्ञाः श्रिये मां सम्प्रचक्षते।
साऽहमेवंविधा नित्या सर्वकरा सनातनी॥ लक्ष्मीतन्त्र, ४/५१-५४

४. जयाख्यसंहिता, पटलः २-३

५. जयाख्यसंहिता, ४/५१

सम्प्रविष्टं महोदधौ। अलक्ष्यश्चोदके भेदः परस्मिन् योगिनां यथा। यथाऽनेकेन्धनादीनि सम्प्रविष्टानि पावके। अलक्ष्याणि च दग्धानि तद्वद्ब्रह्मण्युपासकाः"॥[१] अनेन "यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय" इति श्रुतिर्व्याख्याता। "ब्रह्मण्येकात्मतां याति कर्मवर्गे क्षयं गते[२] इति।" येयमेकात्मतापत्तिरुच्यते, साऽप्येकस्वभावपत्तिरेव।

तस्यास्यापवर्गस्य साधनभूतं भक्तियोगमनुतिष्ठत इत प्रपन्नस्य नित्यकर्मानुष्ठानमिदं प्रपत्त्यङ्गतया। प्रपत्तेः क्वचिदप्येवं परापेक्षा न विद्यते। शिलादिभिः निर्मितासु प्रतिमासु आगमशास्त्रज्ञः अनुष्ठानबलेन प्राणं प्रतिष्ठापयति। शास्त्रसम्मतैः क्रियाकलापैः प्रतिष्ठिता मूर्तयो देवालये समाराध्यमानाः भक्तानाम् अभीप्सितार्थमुपकल्पयन्तीति आगमपारदृश्वानः आमनन्ति। आगमोक्तक्रमेण निर्मितासु प्रतिष्ठापितासु च प्रतिमासु परब्रह्मणोऽर्चनं श्रुतिसम्मतमिति आगमिकाः कथयन्ति।

"प्रवः पान्तमन्धसो धियायते महेशूराय विष्णवे चार्चत"।[३] इति ऋग्वेदवाक्यं समूर्त्तार्चनं विद्यत्ते इति स्वीकृत्य प्रतिमासु भगवदर्चनं वेदसम्मतमिति आगमिकाः प्रतिपादयन्ति। शास्त्रैकसमधिगम्यं परमात्मादिव्यपदेश्यं तत्त्वम्, भगवतः परव्यूहविभवान्तर्यामि अर्चासंज्ञकेषु पञ्चसु रूपेषु सर्वसुलभस्य भक्तानां क्षिप्रसिद्धिप्रदस्यार्चारूपस्य भगवदालये गृहे वा अर्चनम्, प्रपत्तेः मोक्षोपायत्वं, अप्राकृतदेशविशेषप्राप्तिपूर्वकपरिपूर्णब्रह्मानन्दानुावरूपो मोक्षश्च सप्रमाणमिह पाञ्चरात्रग्रन्थे प्राप्यते।

**पाञ्चरात्रे योगपादः**

पाञ्चरात्रागमे योगस्य प्राधान्यामुक्तम्। संयोगो योग इत्युक्तो जीवस्य परमात्मनोः।[४] परमसंहितामते "यत्करोति समाधानं चित्तस्य विषये क्वचित्। अनुकूलमसंक्षोभं संयोग इति कीर्त्यते।[५] ध्यानधारणादयः केचन पातञ्जलसमानाः यौगिकविषयाः योगपादेऽन्तर्भाविताः भवन्ति। विषयेऽस्मिन् पाञ्चरात्रिकं वैशिष्ट्यं तु ध्यानक्रमे वासुदेवस्य ध्येयत्वेन स्वीकरणं यन्नास्ति दृष्टचरं पातञ्जलयोगप्रक्रियायाम्।[६] योगस्य सारम् इत्थम् -

**मन्त्रे योगो लयश्चैव तथा परिचयः स्मृतः।**
**निष्पत्तेश्चेत्यवस्थाश्च योगेषु परिकीर्तिताः॥[७]**

---

१. जयाख्यसंहिता, ४/१२२-२३
२. जयाख्यसंहिता, ३/२२
३. ऋग्वेद, १/१५५, १
४. अहिर्बुध्न्यसंहिता, ३१/१५
५. परमसंहिता, १०/६
६. (क) पाद्मसंहिता, योगपाद, ५/१-५
(ख) विष्णुतिलकसंहिता, ५/४-५
७. श्रीप्रश्नसंहिता, १३/१३

**पाञ्चरात्रे क्रियापादः**

क्रियापादे समूर्त्तार्चनसम्पादनार्थमावश्यकानां कर्षणादिप्रतिष्ठान्तविषयाणां विवेचनं तत्र-तत्र पाञ्चरात्रागमग्रन्थेषु द्रष्टुं शक्यम्। तत्र तावत् आलयार्चामूर्त्यादिप्रतिष्ठापनयोगस्य चाचार्यस्य वरणं,[१] देवालयनिर्माणयोग्याया वास्तु-प्रदेशः,[२] भूमेः परिक्षणं,[३] भूकर्षणं,[४] गर्भन्यासः[५] प्रसादनिर्माणभेदाश्च,[६] बिम्बनिर्माणं[७] प्रतिष्ठाविधिः- इत्येते विषयाः पाञ्चरात्रसंहितासु वर्ण्यन्ते। प्रतिमायां हरेः प्रकर्षेण संनिधानमेव प्रतिष्ठाशब्दस्यार्थः।[८] अत्र प्रकर्षश्च दिव्यमङ्गलविग्रहसम्बन्धः, अङ्गप्रत्यङ्गपूर्तिः इत्यादिः। इदृशबिम्ब एव अभिषेचन- अलङ्करण- नानाविधभूमिकापरिष्करणादिकं च कर्त्तव्यमिति संहितासु विशिष्य उच्यते। "आपीठान्मौलिपर्यन्तं पश्यतः पुरुषोत्तमम्। पातकान्याशु नश्यन्ति किं पुनस्तूपपातकम्"[९] इति।

**पाञ्चरात्रे चर्यापादः**

चर्यापादे वैष्णवानां दीक्षा, आचारनियमादयः भगवदाराधनसम्बद्धाश्च विषया अन्तर्भवन्ति। प्रतिमापूजाविषये दीक्षारहितेन पूजा नैवानुष्ठातव्या। बहुविधमण्डलानां[१०] सत्त्वेऽपि चक्राब्जमण्डलं निर्माय तदाराधनपूर्वकं दीक्षाग्रहणं प्रतिपाद्यते। चक्राब्जमण्डलदीक्षायां पञ्चसंस्कारविधयो बहवः

---

१. पाद्मसंहिता क्रियापदे, १/१५-१९

२. नारदीयसंहिता, १४/२-४

३. पाद्मसंहिता, क्रियापाद, १/३२-३९

४. (क) पाद्मसंहिता, क्रियापाद, ३/१८-३०
   (ख) विमानार्चनकल्प, पटल-३
   (ग) विष्णुसंहिता, १२/३६, १३/५-७
   (घ) अनिरुद्धसंहिता, १/१४-३२

५. श्रीप्रश्नसंहिता, ५/४२-५१

६. (क) विष्णुतिलकसंहिता, ६/१८८-१९१
   (ख) सनत्कुमारसंहिता ब्रह्मरात्र, ८/१५-१६
   (ग) पाद्मसंहिता, क्रियापाद, ४/३९-४४, ८/१-९१
   (घ) भार्गवसंहिता, ३/१९-२०

७. (क) ईश्वरसंहिता, १७/२३८-२३९
   (ख) पुरुषोत्तमसंहिता, ८/३८-४०
   (ग) विख्वक्सेनसंहिता, १०/३१-३४
   (घ) क्रियाधिकार, ५/७४-७५

८. पद्मसंहिता क्रियापादे, २६/२-३

९. शाण्डिल्यस्मृति, २/१६

१०. पौष्करसंहिता, ५/१-८

विस्तरेणोपवर्ण्यन्ते। तापः पुण्ड्रस्तथा नाम मन्त्रोयागश्च पञ्चमः"।[१] जयाख्यसंहितायां तु दीक्षाभिषेकशब्दौ पर्यायतया प्रयुक्ताविव दृश्येते। तद्यथा –

**सेनापतिक्रमेणैव समयज्ञस्य सर्वदा। महामन्त्रित्वविधिना पुत्रकस्याभिषेचनम्॥**
**युवराजविधानेन दातव्यः साधकस्य च। राजोपचारविधिनां अभिषेको गुरोः स्मृतः॥**[२]

इदं त्ववधेयमत्र पाञ्चरात्रागमेषु दीक्षितस्य चतस्रोऽवस्था वर्णिताः। दीक्षाविधिः वर्तते जयाख्यायं षोडशपटले। अभिगमन– उपादान– इज्या– स्वाध्याय– योगाख्यानि पञ्चसु कालेष्वनुष्ठेयानि सुविशदं निरूप्यन्ते।[३] मानसयाग–बाह्ययागभेदेन द्विविधं भगवदाराधनं चर्यापादेऽस्मिन् संलक्ष्यते।[४] भगवदाराधने आन्तरपुष्पादीनां मुख्यत्वम् –

**अहिंसा प्रथमं पुष्पं पुष्पमिन्द्रियनिग्रहः।**
**सर्वभूतदया पुष्पं क्षमा पुष्पं विशेषतः॥**
**ज्ञानं पुष्पं तपः पुष्पं ध्यानं पुष्पं तु सप्तमम्।**
**सत्यमेवाष्टमं पुष्पं तेन तुष्यति केशवः॥**[५]

अस्मिन् सम्प्रदाये कुम्भ–मण्डल–वह्नि–बिम्बेषु चतुर्षु स्थानेषु क्रियमाणं भगवतः पूजनं,[६] विष्ण्वालयेषु प्रतिवर्षं कस्मिंचित् नियते काले क्रियमाणो महोत्सवः,[७] चन्द्रोपरागादिनिमित्तेषु विधियमानं भगवतः स्नपनं,[८] प्रायश्चित्तविशेषाश्चात्[९] चर्यापादे सविस्तरं प्रस्तुयन्ते।

---

१. ईश्वरसंहिता, २१/२८४–२९२
२. जयाख्यसंहिता, १८/३४–३५
३. (क) पारमेश्वरसंहिता, क्रियाकाण्ड, ९/१५५–१५६
 (ख) पाद्मसंहिता, चर्यापाद, अध्याय १३
 (ग) जयाख्यसंहिता, अध्याय– २२/६८–७४
 (घ) नारदीयसंहिता, अध्याय– ३०
४. जयाख्यसंहिता, पटलः १२–१३
५. श्रीपाञ्चरात्ररक्षा – तृतीयोऽधिकारः।
६. अनिरुद्धसंहिता, ६/६०–६४
७. (क) श्रीप्रश्नसंहिता, अध्याय ३०–४८
 (ख) नारदीयसंहिता, अध्याय १९
८. (क) परमसंहिता, २१/४२
 (ख) पारमेश्वरसंहिता, अध्याय १४
 (ग) ईश्वरसंहिता, अध्याय १५
९. प्रायश्चित इन दी कनोनिकल वर्क्स आफ दी पाञ्चरात्रागम, डॉ. डेनियल स्मिथ, आड्यार लाइब्रेरी बुलेटिन, वा. ३०, १९६६, पृ. २३–४३

# वस्त्रविज्ञान :

## वेद के विशेष सन्दर्भ में

**श्रीमती पद्मजा अमित**

वस्त्र मानव की मूलभूत आवश्यकता होने के साथ-साथ उसके व्यक्तित्व तथा सामाजिक जीवन के लिए भी महत्त्वपूर्ण वस्तु है। शरीर की उष्णता को बनाये रखने के लिए, शीत, ग्रीष्म, वर्षा के प्रकोप से बचने के लिए तो वस्त्र की उपादेयता है ही साथ ही स्वयं को अधिक आकर्षक बनाने के लिए, अभिनिर्धारण के लिए सामाजिक स्थिति एवं समृद्धि तथा सम्पन्नता को प्रदर्शित करने में भी वस्त्रों का महत्त्वपूर्ण योगदान रहता है। मानव जीवन के विभिन्न कार्य-कलापों से वस्त्रों का घनिष्ठ सम्बन्ध है। वास्तविकता तो यही है कि वस्त्र और व्यक्ति का सम्बन्ध अटूट है। यही कारण है कि वस्त्र उत्पादन विश्व के सभी देशों में आज एक महत्त्वपूर्ण उद्योग बन गया है।

वस्त्र मानव सभ्यता एवं संस्कृति के सूचक हैं। आज से ही नहीं, प्रारम्भिक काल से ही मानव शरीर ढकने का प्रयत्न करता रहा है। इस कार्य के लिए उसने आदिम युग में घास-फूस, पेड़पौधे पत्र-छाल, मृतपशुओं की चर्म आदि का आश्रय लिया, परन्तु मानव इतने से कब सन्तुष्ट होने वाला था। संस्कृति एवं सभ्यता के विकास के साथ ही मनुष्य की उन्नत अभिरुचि एवं परिष्कृत विचारधारा ने उसे वस्त्र एवं उसकी उत्पत्ति के साधन एवं वस्त्र-निर्माण-कला की ओर प्रेरित किया। कह जा सकता है कि मानव सभ्यता एवं संस्कृति का इतिहास वस्त्र-उत्पादन की कला के उद्भव एवं विकास से सतत सम्बन्ध रखता आया है। तब से आज तक वस्त्र निर्माण कला में उत्तरोत्तर विकास होता रहा है तथा आज भी इस दिशा में अनवरत रूप से मनुष्य प्रयत्नशील है। संस्कृति की प्रगति के साथ ही वस्त्र विन्यास का महत्त्व शरीर को अलंकृत करने की दिशा में विशेष रूप से दिखलायी देता है। वस्त्र विन्यास के द्वारा सुन्दर बन जाने की कला को मानव ने सुदूर प्राचीनकाल से अपनाया।

कला मानव के व्यक्तित्व को विकसित करने का साधन है और यह विकास सर्वदा युग सापेक्ष होता है। वस्त्रविद्या भी ऐसी ही कला है जो युग के साथ परिवर्तित तो होती रही लेकिन अपने महत्त्व को कदापि कम नहीं होने दिया। वात्स्यायन का कामसूत्र निश्चित रूप से कवि कल्पना नहीं बल्कि, वास्तविक

परिस्थितियों को बताने वाला ग्रन्थ है[१], उसमें परिगणित ६४ कलाओं में सूचीवान कर्माणि[२] भी एक महत्त्वपूर्ण कला कही गयी है। सूई से सम्पन्न होने वाले कार्य यथा सीना, पिरोना, बुनना इसके अन्तर्गत रखे गये हैं। दैनन्दिन जीवन की उपयोगी कलाओं में वस्त्र विन्यास की महत्ता सामाजिक दायित्व की दृष्टि से और बढ़ जाती है। ललित विस्तर एवं नीतिसार में भी यह कला महत्त्वपूर्ण कलाओं में मानी गई है।

वस्त्र एवं उनके बनने में सहयोगी सामग्री से सम्बन्धित विषय वस्त्र विज्ञान का क्षेत्र है। आधुनिक समय में, वस्त्रविज्ञान एक स्वतन्त्र विषय बन गया है तथा गृहविज्ञान से सम्बद्ध है। प्राचीन समय में भी भारत में वस्त्रों एवं उनके निर्माण की प्रक्रिया पर पर्याप्त ध्यान दिया जाता रहा है इसका ज्ञान प्राचीन साहित्य से होता है। विश्व की किसी भी जाति की संस्कृति और सभ्यता का ज्ञान उसकी वेशभूषा एवं आचार-विचार से होता है। शरीर पर धारण किये जाने वाले स्तर एवं सुरुचि के द्यत्तक होते हैं। वैदिक युग की वस्त्र-विद्या एवं वस्त्र-उद्योग की जानकारी विद्याओं के मूल भी कहे जाते हैं। वस्त्र बुनने की विद्या का उल्लेख वेद में कहीं यज्ञ प्रकरण में तो कहीं उषा के वर्णन में, अन्यत्र वरुण आदि देव के मन्त्रों में मिलता है। ऋग्वेद (१०.२६.६) में पूषा को वासोवाय: कहा है। यद्यपि यह एक प्रतीकात्मक सन्दर्भ है तथापि इसके आधार पर वस्त्र बुनने की कला को लोकप्रियता एवं वस्त्र व्यवसाय की उपयोगिता एवं महत्ता का ज्ञान होता है। एक मन्त्र में काव्य करने की तुलना कपड़ा बुनने के साथ की गई है, जिस प्रकार कवि स्थान-स्थान से शब्द लेकर काव्य रचना करते हैं। उसी प्रकार भिन्न-भिन्न सूत्रों को लेकर जुलाहे कपड़ा बनाते हैं-

**उभा नूनं तदितर्थयेते वितन्वाथे धियोवस्त्राऽपसेव।** ऋ. १०.१०६.१

वस्त्र बुनने के लिए कारीगर में जिन गुणों की स्थिति आवश्यक है वेद में उस पर भी विचार किया गया है। उत्तम रीति से कार्य पूर्ण करने का चातुर्य, बुद्धिमत्ता होने से ही कर्म में श्रेष्ठता आती है। बुद्धिमत्ता के साथ, उत्तम कुशलतापूर्वक, उत्तम साधनों के द्वारा कल्याणकारक वस्त्र बनाने चाहिये। ऐसा करने से ही धन की प्राप्ति होती है।[३]

वस्त्रों के लिए वेद में वास: शब्द का प्रयोग मिलता है। आपस्तम्बधर्मसूत्र[४] में भी यही शब्द वस्त्र के लिए उपलब्ध है। विशिष्ट वस्त्रपरिधान के सूचक शब्द भी द्रष्टव्य है-यथा अधीवास:[५] (सबसे ऊपर

---

१. हजारीप्रसाद द्विवेदी
२. कामसूत्र, १.३.१५
३. वस्त्रेव भद्रा सुकृता वसूयू रथं न धीर: स्वपा अतक्षम्॥ ऋ. ५.२९.१५
४. ऋ. १.२.३९
५. अधीवासं परिमातूरिहन्नह। ऋ. १.१४०.९

ओढने का दुशाला) नीवि[१], द्रापि:[२] (कोट) शामुल्य (सर्दी के दिनों में पहना जाने वाला चोगा) वस्त्र को सुरुचिपूर्ण ढंग से धारण करने का महत्त्व प्राय: वैदिक काल से ही मिलता है। जो कपड़े भली-भांति पहने जाते थे उन्हें सुवसन कहा जाता था सुवसन के द्वारा व्यक्तित्व प्रभावोत्पादक बन जाता है यह मान्यता वैदिक काल में जितनी सत्य है उतनी आज भी है। ऐसे सुन्दर व्यक्तित्व वाले के लिए सुवासा: (ऋ. १.१२४.८) शब्द का प्रयोग किया गया है। नेत्रों को आकृष्ट करने वाले वस्त्र विन्यास का एक विशेषण सुरभि[३] था। अपनी सात्विक प्रकृति एवं सरल रहन-सहन की प्रवृत्ति के होने पर भी वस्त्रों के कलात्मक एवं शोभनीय रूप के प्रति भी पर्याप्त सजगता वैदिक एवं आर्यों में द्रष्टव्य है। कल्याणकारक, चित्रविचित्र रंगों से सजे सुन्दर वस्त्रों का उल्लेख ऋग्वेद (१.१३४.४) में मिलता है। विशिष्ट अवसरों पर विशिष्ट वस्त्र पहनने का प्रचलन था। प्रत्येक संस्कार और धर्म विधि के लिए तथा प्रत्येक सामाजिक एवं राजकीय महोत्सवों पर भिन्न-भिन्न वस्त्र धारण किये जाते थे। यज्ञ के वस्त्र कुशलस्त्रियों के द्वारा बुने जाने का भी उल्लेख मिलता है। यज्ञ के समय जो वस्त्र पहने जाते थे वे 'यज्ञस्य पेश:' कहलाते थे[४]। मांगलिक वस्त्र 'वास: सुमंगलं (अथर्व, १४.१.३०) कहा गया है। विवाह के अवसर पर वधू जो वस्त्र धारण करती थी उसे वाधूयं वास:[५] कहते थे।

वस्त्रों पर अलंकरण द्वारा पहनने वाले की विशेषताओं का परिचय कराये जाने की परम्परा थी वस्त्रों का सम्बन्ध वर्ग विशेष से भी होता था। अथर्ववेद में राजा की पोशाक का विशिष्ट होना कहा गया है। राजसभा में जहाँ प्रजाकल्याण का विचार होता है और जहाँ विनाश से संरक्षण का उपाय सोचा जाता है उन सभाओं में राजा किस प्रकार की पोशाक पहने इसके सम्बन्ध में वेद में विचार किया गया है- बृहस्पति ने यह वस्त्र सोम राजा को पहनने के लिए दिया है-हे राजन् इसे पहनो, प्रजा का कल्याण करो और विनाश से उसे संरक्षण प्रदान करो।[६] पितरों के लिए भी विशिष्ट कपड़ों का विधान है पितरो वास: (यजु. २.३२) वस्त्र पर कई प्रकार से सजावट की जाती थी उनके रंग व बनावट में भी विभिन्नता होती थी-

**वासो अग्ने विश्वरूपं संव्ययस्व विभावसो॥** यजु. ११.४०

---

१. यत्ते वास: परिधानं यां नीविं कृणुषेत्वम्॥ अथर्व. ८.२.१६
२. ऋ. १.२५.९२
३. ऋ. ६.२९.३ वसानो अत्कं सुरभिं शरीर के अनुसार यथायोग्य कोट
४. वही, २.३.६
५. ऋ. १०.८५.३४, अथर्व. १४.२.४१
६. अथर्व, २.१३

